ISSN :- 0974 - 8946

अनुसन्धान-प्रकाशन-विभागीया
त्रैमासिकी शोध-पत्रिका

# शोध-प्रभा

**(A REFEREED QUARTERLY RESEARCH JOURNAL)**

३८ वर्षे चतुर्थोऽङ्कः (अक्टूबरमासाङ्कः) २०१३ ई०

प्रधानसम्पादकः
**प्रो० भवेन्द्रझा**
कुलपतिः

सम्पादकः
**प्रो० रमेशकुमारपाण्डेयः**

सहसम्पादकः
**डॉ० ज्ञानधरपाठकः**



**प्रकाशन-स्थलम्**
**श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठम्**
(मानितविश्वविद्यालयः)
नवदेहली-११००१६

ISSN :- 0974 - 8946

अनुसन्धान-प्रकाशन-विभागीया
त्रैमासिकी शोध-पत्रिका

# शोध-प्रभा

**(A REFEREED QUARTERLY RESEARCH JOURNAL)**

३८ वर्षे चतुर्थोऽङ्कः (अक्टूबरमासाङ्कः) २०१३ ई०

प्रधानसम्पादकः
**प्रो० भवेन्द्रझा**
कुलपतिः

सम्पादकः
**प्रो० रमेशकुमारपाण्डेयः**

सहसम्पादकः
**डॉ० ज्ञानधरपाठकः**



प्रकाशन-स्थलम्
**श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठम्**
(मानितविश्वविद्यालयः)
नवदेहली-११००१६

प्रकाशकः

**श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठम्**

(मानित-विश्वविद्यालयः)

कुतुब इन्स्टीट्यूशनल एरिया,

नवदेहली-११००१६



ISSN :- 0974 - 8946

३८ वर्षे चतुर्थोऽङ्कः (अक्टूबरमासाङ्कः) २०१३ ई०



मुद्रकः

**अमरप्रिंटिंगप्रैसः**

दिल्ली

amarprintingpress@gmail.com

प्रधानसम्पादकः

**प्रो० भवेन्द्रझा**

कुलपतिः

**सम्पादकः**

प्रो० रमेशकुमारपाण्डेयः

**सम्पादकमण्डलम्**

प्रो० (श्रीमती) अमिता शर्मा

प्रो० जयकान्तसिंहशर्मा

प्रो० हरेरामत्रिपाठी

**सहसम्पादकः**

डॉ० ज्ञानधरपाठकः

# शोध-प्रभा

## श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठस्य
## अनुसन्धान-प्रकाशन-विभागीया पत्रिका

१. एषा त्रैमासिकी शोध-पत्रिका।

२. अस्याः प्रकाशनं प्रतिवर्षं जनवरी-अप्रैल-जुलाई-अक्टूबरमासेषु भवति।

३. अस्याः प्रधानमुद्देश्यं संस्कृतज्ञेषु स्वोपज्ञानुसन्धान-प्रवृत्तेरुद्बोधनं प्रोत्साहनं विविधदृष्ट्याऽनु-सन्धेयविषयाणां प्रकाशनं च विद्यते।

४. अस्यां श्रीलालबहादुरशास्त्री-राष्ट्रियसंस्कृतविद्यापीठस्थानामन्येषां च विदुषां स्वोपज्ञविचारपूर्णा अनुसन्धानप्रधाननिबन्धाः प्रकाश्यन्ते।

५. अप्रकाशितानां दुर्लभानां प्राचीनाचार्यरचितानां लघुग्रन्थानां सम्पादनभावानुवादटीकाटिप्पण्यादि-पुरस्सरं प्रकाशनमप्यस्यां क्रियते।

६. प्रकाशित-निबन्धः पत्रिकायाः एक प्रतिः लेखकाय निःशुल्कं दीयते, यस्मिंस्तदीयो निबन्धः प्रकाशितो भवति।

७. अस्यां पत्रिकायां विशिष्टानां संस्कृत-हिन्द्याङ्ग्ल-ग्रन्थानां समालोचना अपि प्रकाश्यन्ते। आलोच्यग्रन्थस्यालोचना यस्मिन्नङ्के प्रकाशिता भवति सोऽङ्को ग्रन्थकर्त्रे निःशुल्कं दीयते किञ्च समालोचनापत्राण्यपि यथासौविध्यं दीयन्ते।

८. अस्याः वार्षिकसदस्यताराशिः १५०.०० रु० (पञ्चाशदुत्तरैकशतं रूप्यकाणि) सदस्यताराशिः **कुलसचिव, श्रीलालबहादुरशास्त्री-राष्ट्रिय-संस्कृत-विद्यापीठ**, नई दिल्ली-१६, इति सङ्केतेन (बैंकड्राफ्ट अथवा मनीआर्डर) द्वारा प्रेषणीयः।

९. पत्रिकासम्बन्धी सर्वविधः पत्रव्यवहारः 'सम्पादकः' 'शोध-प्रभा', श्रीलालबहादुरशास्त्री राष्ट्रिय-संस्कृतविद्यापीठ, कटवारिया सराय, नई दिल्ली-११००१६ इति सङ्केतेन विधेयः।

**सम्पादकः**

# पुरोवाक्

अध्यात्मपरायणा त्यागमूला समन्वयात्मिका सहिष्णुतासंयुता भारतीयसंस्कृतिः विश्वस्मिन् विश्वे अनुपमा वर्तते। 'वसुधैव कुटुम्बकम्', 'यत्र विश्वं भवत्येकनीडम्', 'मित्रस्य चक्षुषा सर्वाणि भूतानि समीक्षे', संगच्छध्वं संवदध्वम्--''सर्वे भवन्तु सुखिनः'' इत्यादिवाक्यख्यापितायाः विश्वबन्धुत्वभावनायाः परिकल्पना अस्याः सर्वातिशायि महत्त्वं द्योतयति। सम्प्रति सर्वे देशा भूमण्डलीकरणाय प्रयतन्ते। विविधराष्ट्रेषु ऐक्यं विचारसाम्यं सहभागित्वं समन्वयं सहिष्णुतां पारस्परिकसद्भाववृत्तिञ्च प्रतिष्ठापयितुं प्रयासो विधीयते।

संसारेऽस्मिन् विलसन्ति स्वाभिप्रायाभिव्यक्तिसाधनभूता विभिन्नाभाषाः। तासु भाषासु संस्कृतभाषा सर्वोपरि वर्तते। केचन विदेशीया विद्वांसः इयं मृतभाषा इतिप्रचारमकुर्वन्। इयं भाषा न कदापि व्यवहारभाषा आसीदिति तेषां मतम्। परं यदि वयं प्राचीनसंस्कृतव्याकरणसाहित्यादिशास्त्रग्रन्थान् सम्यगवलोकयामः तदा अस्माभिरिदं स्पष्टतयाऽवगम्यते यदियं भाषा व्यवहारभाषा आसीदिति। भगवता पाणिनिना स्वीयाष्टाध्याय्यां च्छन्दसि, भाषायाम् इति विभागं कृत्वैव शब्दानामन्वाख्यानमक्रियत। अत्र भाषा नाम लौकिकी भाषा एवं या लौकिकी भाषा सैव व्यावहारिकी भाषा इत्यर्थः। भगवता पतञ्जलिना विरचितमहाभाष्यादपि स्पष्टं प्रतीयते यत् संस्कृतं भाषितभाषा आसीदिति।

परकीयशासनवशात् जीवन्त्याः अपि अस्याः देववाण्याः अभिवृद्धिकार्यं किञ्चित् कुण्ठितमासीत्। अस्याः भाषायाः अभिवृध्यै स्वातन्त्र्योत्तरभारते सर्वकारेण स्वयंसेवासंस्थाभिश्च नैके कार्यक्रमाः समायोजिताः सन्ति। अद्यावधि यावद्धनं व्ययीकृतं सर्वकारेण यावान् प्रयत्नः विहितः स्वयंसेवासंस्थाभिः तावदभिवृद्धिः संस्कृतस्य न संजाता इति चेखिद्यते न श्चेतः।

संस्कृते न केवलं काव्यसाहित्यविषयकाः ग्रन्थाः सन्ति। परं ज्योतिषशास्त्र-पाकशास्त्र-अर्थशास्त्र-राजनीतिशास्त्रादिविषयकाः ग्रन्था अपि सन्ति। एवमेव भौतिकविज्ञान-रसायनविज्ञान-वैद्यकविज्ञान-खगोलविज्ञान-भूविज्ञान-धातुरसायन-विज्ञान-विषयकाः ग्रन्थाः सन्ति। तेषां विषये विद्यापीठे अनुसन्धानम् भवेत्। एवमेव तादृशग्रन्थानां प्रकाशनार्थमपि विद्यापीठे व्यवस्था भवेत् तादृशः प्रयत्नो विधीयते।

शोधप्रभायाः प्रकाशनसदुद्यमे अनुत्तमं कौशलं प्रकटीकृतवन्तः शोधप्रभासम्पादकाः आचार्यरमेशकुमारपाण्डेयाः समं च सर्वेऽस्या अनुसन्धातारो लेखकाः साधुवादपात्रं सन्ति। इतश्च भूयोऽपि समुज्ज्वलं शास्त्रादिचिन्तनप्रभा शोधप्रभा प्रकटीकरिष्यतीत्याशासे।

**प्रो. भवेन्द्रझा**
कुलपतिः (प्रभारी)

# सम्पादकीयम्

श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठस्य शोधप्रभाख्या शोधपत्रिका विविधविषयगवेषणपूर्णानां निबन्धानां संग्रहं क्रोडीकृत्य विद्योततेतराम्। अनुसन्धानसरणिसम्पन्नानामाचार्याणां शोधार्थिनाञ्च शोधपूर्ण-निबन्धान् कलेवरीकृत्य संस्कृतवाङ्मयपरिपोषणे निमग्नेयम् आनन्दसागरे निमज्जयति विदुषो नितान्तम्।

शोधशब्दस्य कृते अनुसन्धानशब्दस्यापि प्रयोगः विधीयते। अयं प्रश्नः जागर्ति, यत् शोधो नाम किम्? तदा विचार्यते -- नवीनतथ्यानामुद्घाटनम् अथवा पूर्वत एव अवगतानां तथ्यानां नवीनप्रणाल्या प्रतिपादनमेव सामान्यतया अनुसन्धानस्य अर्थ अस्ति। पाण्डुलिपीनां सम्पादनं तथा कोशग्रन्थसम्बद्धकार्याणि अपि प्रकारान्तरेण उपर्युक्तविधासु समाविष्टानि भवितुम् अर्हन्ति। शोधस्य विषयः उपाधिसापेक्ष उपाधिनिरपेक्षो वा भवेत्, तत्र एको निश्चितः क्रियाविधिरपेक्षितो भवति। कस्मिन्नपि विषयविशेषे शोधस्य कार्यं स्वतः स्फूर्तमपि भवितुमर्हति अन्यप्रेरितमपि। उभयथापि प्रायः शोधकर्त्तुः सामान्यात् विशेषं प्रति, ज्ञाताद् अज्ञातं प्रति, समष्टितः व्यष्टिं प्रति, प्रसृतात् स्रोतसं प्रति, अथवा अपेक्षाकृतसन्दिग्धात् अपेक्षाकृतनिश्चितं प्रति अभिमुखीभवनम् आवश्यकं भवति। केचिद् विशिष्टशोधकर्त्तारः अत्र विषये व्यतिक्रमेणापि गन्तुं प्रभवन्ति। साहित्य-दर्शनादिसंस्कृतवाङ्मये शोधकार्ये प्रवृत्ता अनुसन्धातारः प्रायः पूर्वमार्गस्यैव अनुसरणं कुर्वन्ति। सभ्यमानवस्य अधिकानि कार्याणि प्रायः येन भावनाद्वयेन प्रेरितानि भवन्ति, तत्र प्रथमा भावना भवति-- 'स्वीयसुन्दरसुखदास्तित्वनिर्माणस्य' द्वितीया च 'वर्तमान-भाविजनेषु स्वव्यक्तित्वबोधस्थापनस्य'। निष्कामकर्मयोगेऽपि स्वस्य कृते न स्यात्; परम् अन्येषां कृते तु यत्किमपि उद्देश्यं भवत्येव।

अनुसन्धानकार्याय सर्वस्मादावश्यकस्त्वभिनिवेशः वर्तते। अभिनिवेशं विनानुसन्धानकार्यमसम्भवमेव भवति। प्रायेणैवं दृश्यते यदुत्तमोत्तमा अपि विद्यार्थिनो मनोवृत्तिप्रतिकूलं विषयं गृह्णन्ति। तेषु कतिपय एव ईदृशाः भवन्ति, ये स्वकीयसंयमाध्यवसायादिगुणैः तस्य विषयस्य निर्वाहं कर्तुं प्रभवन्ति, अधिकांशास्तु तं विहाय ततो विरता एव जायन्ते। मनोरुचिप्रतिकूलविषये साभिनिवेशता समुत्पादयितुं न शक्नुवन्ति, तेन, विना चानुसन्धानकार्यं कथं भवेत्? तेभ्यस्तु तत्कार्यं पर्वतभङ्गवत् कठिनं जायते; किन्तु तदेव कार्यं तद्विषये प्राप्तसहजरुचये मनोरमं भवति। अतोऽभिनिवेशः यं विषयं प्रति जागरूको भवेत् वर्तेत वा, स एव अनुसन्धित्सुना ग्रहीतव्यः, निर्देशकेनापि चात्रावधानमवश्यं देयम्। प्रयोजनं विना अभिनिवेशोऽपि न जायते।

शोधप्रभायाः अस्मिन्नङ्के विविधविषयविश्लेषपराः द्वादश लेखाः प्रकाश्यन्ते। एवं प्रतिभाविशेषोद्भासितशोधपूर्णा संस्कृतसौरभं वितन्वतीयं विदुषां सन्तोषाय भविष्यतीति कामयमानोहं प्रमादादज्ञानाद्वा सञ्जातस्य दोषजातस्य प्रशमनार्थं निर्देशादिप्रदानैश्च उत्साहश्रियः संवर्धनार्थमभ्यर्थये सुमनसः विदुषः।

**प्रो. रमेशकुमारपाण्डेयः**

सम्पादकः

# विषयानुक्रमणिका

## संस्कृतविभाग:



## हिन्दी विभाग

# वैयाकरणानां मतेन कारकविमर्शः

डॉ. केशवकुमाररायः

प्रौढ़मनोरमाकारभट्टोजिदीक्षितप्रभृतयः कारक इति महासंज्ञाबलादन्वर्थत्वाश्रयणेन करोति - स्वसम्बन्धेन क्रियायां विशेषरूपतां सम्पादयतीतिव्युत्पत्त्या क्रियान्वयिन एव कारकसंज्ञाकर्मादिसंज्ञाचेति क्रियान्वयित्वमेवोद्देश्यतावच्छेदकम्, अथवा यावद् ब्रूयात् क्रियायामिति तावत्कारके इति। एवं च कृत्वा निर्द्देश उपपन्नो भवति कारके इति। इतरथाहि कारकेष्विति ब्रूयात्, इति भाष्योक्त्या करोति कर्तृकर्मादिव्यपदेशानितिव्युत्पत्त्या कारकपदस्य क्रियापरत्वपक्षे शीघ्रोपस्थितिकत्वेन अन्वयीत्यध्याहारेण क्रियान्वयित्वस्यैव कर्मादिसंज्ञोद्देश्यतावच्छेदकत्वप्रतीतेः[1]। न चैवं कारकाणां भावनान्वय इति वाक्येन बोधानुपपतिः, कारकपदस्य रूढत्वपक्षे संकेतसम्बन्धेन कारकपदवत्त्वस्य कारकपदज्ञाप्यतत्तच्छक्तिमत्त्वस्य वा रूढ्यर्थतावच्छेदकतयान्वयबोधे बाधकाभावात्।

एवं चासन्निहितविप्रादिरूपसम्प्रदानस्थले क्रियाजनकत्वं कारकत्वमितिपक्षे विप्रादेः दानाव्यवहितप्राक्क्षणावच्छेदेन पूर्ववृत्तित्वाभावेन क्रियाजनकत्वाभावात्सम्प्रदानत्वाप्राप्तावपूर्वद्वारायागस्येव स्वविषयकज्ञानद्वारा, ज्ञानगतजनकत्वस्य विप्रे आरोपेण, बौद्धविप्रस्य पूर्ववृत्तित्वेन वा सम्प्रदानादिसंज्ञोपपादनक्लेशो न कर्त्तव्यः, क्रियान्वयित्वमात्रेणैव तदुपपत्तेः। न चाधिकरणकारकस्यापि कर्तृकर्मघटितसम्बन्धेन साक्षादेव क्रियान्वये ''अक्षशौण्डः'' इत्यत्र सप्तम्यन्तार्थस्य शोण्डपदार्थेऽन्वयाभावात्समासानुपपत्तेः, शौण्डपदस्यासक्तशौण्डे लक्षणया आसक्तिक्रियारूपशौण्डपदार्थैकदेशेऽन्वयेन तदुपपत्तेरिति।

शब्दरत्नकारास्तु[2] भाष्ये ''करोति क्रियां निर्वर्तयति'' इति व्युत्पत्तिदर्शनात् क्रियाजनकत्वमेव कारकत्वम् इति प्रतिपादितवन्तः। अधिकरणकारकस्य कर्तृकर्मद्वारा क्रियान्वय इति क्रियाजनकत्वरूपकारकत्वमप्यस्ति ''अक्षशौण्डः'' इत्यादौ शौण्डपदार्थे एवान्वयेन सामर्थ्यसत्त्वात् लक्षणां विनैव समाससिद्धिः। अत एवाक्षविषयकशौण्डत्ववान् इति स्वारसिकबोधोपपत्तिः। ननु अक्षशौण्डस्य धनमित्यादौ कर्तृकर्मद्वारा क्रियान्वयाभावात् समासानुपपत्तिरिति चेन्न तत्र शौण्डपदस्यासक्तशौण्डे लक्षणयादोषाभावात्। ''अक्षशौण्डः'' इत्यत्रा ''न विधौ परः शब्दार्थः'' इति न्यायरूपबाधसत्त्वेन लक्षणाया असम्भवेऽपि अत्रा लक्षणायां बाधकाभावादित्याहुः।

---

1. कारके पा.सू. 1/4/23 महाभाष्यम्
2. शब्दरत्नटीका कारक प्रकरणस्य

लघुशब्देन्दुशेखरादिकर्त्ता महावैयाकरणनागेशभट्टस्तु क्रियाजनकत्वं कारकत्वम् इति कारकलक्षणम् उक्तवान्। भाष्ये करोति क्रियां निर्वर्तयति इति व्युत्पत्ति दर्शनात्। ब्राह्मणस्य पुत्रां पन्थानं पृच्छति इत्यादौ ब्राह्मणस्य न कारकत्वं भवति। पुत्रोण अन्यथासिद्ध्या तत्त्वाभावात्। क्रियाजनकत्वं जन्यजनकभावघटितक्रियाकारकभावसम्बन्धेन क्रियान्वयित्वम् एव क्रियान्वयित्वं प्रतिफलति। अतएव कारकाणां क्रियायामेव अन्वयो भवति। क्रियाजनकम् इति ज्ञाते का सा क्रिया इत्याकांक्षोदयेन क्रियाया: जनकाकांक्षया च तत्रौव अन्वयस्य औचित्यात्। क्रियात्वस्य साध्यत्वरूपत्वेन साध्यतायाश्च जन्यत्वविशेषरूपतया तस्य च जनकांशे नित्यसाकांक्षत्वात् तत्र तदन्वयस्य औचित्यं स्पष्टं भवति।

एवं च सर्वेषाम् एवं कारकाणां स्वस्वावान्तरक्रियाद्वारा प्रधानक्रियानिष्पादकत्वं भवति। क्रियायां प्राधान्यं च फलजनकत्वरूपम्। यथा वह्निना स्थाल्यां तण्डुलान् पचति चैत्र: इत्यत्र विक्लितिजनकतया पच्धातूपात्तव्यापारस्य प्राधान्यं भवति। असन्निहितसम्प्रदानस्यापि दातृबुद्धिस्थत्वावश्य-कत्वेन स्वज्ञानपूर्वकालकत्वेनैव जनकत्वम्। एवं स्तोकं पचति इत्यादौ फलस्यापि। घटं करोति, घटं स्मरति इत्यादौ च बौद्धघटादे: पूर्वकालत्वेन स्मृत्यादिनिष्पादकत्वं सम्भवति। एवं च सम्प्रदानज्ञानवर्तिन्या: दानजनकताया: सम्प्रदाने आरोप: सम्भवति। न च घटस्य अनुत्पत्तिदशायां एव घटं करोति इति प्रयोग: भवति, स इदानीं न स्यात्। तदानीं घटाभावेन तत्र घटजनकत्वासम्भवात्। एवं घटं स्मरति घटे स्मरणजनकत्वासम्भवात् कारकत्वं न स्यात् इति कथनं नैव सम्यक्। घटं करोति इत्यादिस्थले मृदादिवृत्तिजनकत्वस्य घटं स्मरति इत्यत्रा च सम्बन्धिज्ञाननिष्ठजनकत्वस्य घटे आरोपसम्भावात्। अत्रा सर्वत्रा आरोपे प्रमाणं तु तस्य तस्य भाष्यादौ कारकत्वेन व्यवहार एव। केचित् तु ''करोति क्रियां निर्वर्त्तयतीत्यस्य क्रियाविषयकनिराकांक्षबोधोत्पादक इत्यर्थ:, ज्ञानमात्रं प्रति विषयस्य कारणत्वात्। क्रियाविषयकबोधस्य तत्तत्कारकावगाहित्वे हि किंकर्तृक्रियमित्याद्याकांक्षा शाम्यति। क्रियापदस्य क्रियाविषयकबोधपर्यन्तार्थस्वीकारवल्लक्षणपदस्यापि लक्षणविषयक-

बोधपर्यन्तार्थस्वीकारेण च - ''मयास्य लक्षणं कृत'' मित्यादि व्यवहार उपपद्यते। तत्रा हि वाक्यविशेषरचनद्वारा पृथिव्यादिलक्षणज्ञानमेव तेन क्रियते न तु लक्षणं, तस्य वस्तुनिष्ठत्वेन कर्त्तुमशक्यत्वात्।

एवं च क्रियाविषयकनिराकांक्षबोधजनकत्वं कारकपदस्य योगार्थतावच्छेदकम्। क्रियाया अपि स्वविषयकनिराकांक्षबोधजनकत्वात्तत्र कारकत्वातिप्रसंगभंगाय कारकपदवत्त्वं रूढ्यर्थतावच्छेदकमित्यपि स्वीकार्यम्। क्रियाया अपि क्रिया जनकत्वस्य ''यागाय याति'' ''द्रष्टुं याती'' त्यादौ दर्शनात्तत्र कारकत्वव्यवहारापत्त्या ''क्रियाजनकत्वं कारकत्व''. मिति कल्पेपि कारकपदवत्त्वस्य रूढ्यर्थतावच्छेदकत्वं स्वीकार्यमेवेत्याहु:।[3]

ज्ञानमात्रं प्रति विषयस्य कारणतया घटोत्पत्ते: पूर्व घटस्याभावे तद्विषयकज्ञानं नोत्पद्येत। अत: नागेशेन बौद्धघटकल्पनाकृता विद्यते। बुद्धिस्थस्य घटस्य अनुत्पादनीयतया तस्य च नियतपूर्ववर्तितया

---

3. लघुशब्देन्दुशेखर: - कारकप्रकरणम्

ज्ञानजनकत्वं सुलभं भवति।

परे तु एवं बुद्धिस्थस्य घटादेः स्मृत्यादिनिष्पादकत्वेऽपि बुद्धिस्थघटादेरेव कर्मत्वं स्यात्, न तु बाह्य घटादेः। अतः स्वज्ञानस्येव पूर्वकालत्वेन अत्रापि क्रियाजनकत्वं बोध्यम् इत्याहुः।[4]

तथा च क्रियाजनकत्वेन विवक्षितत्वमेव कारकत्वं कारकस्य लक्षणं शब्दशास्त्रो प्रसिद्धयति। करोति क्रियां निर्वर्तयति यत् तत् कारकम् इति कारकपदस्य व्युत्पत्त्यापि इदमेव लक्षणं समर्थितं सिद्धयति। कर्तृत्वकर्मत्वाद्यन्यतमशक्तिरूपत्वं कारकत्वम् अपि वर्तते एकः पक्षः। तत एव शक्तिद्वयमध्ये इत्याद्यर्थकं सप्तमीपंचम्यौ–

कारकमध्ये इति पाणिनिसूत्रां संगच्छते।

भर्तृहरिणा चाऽपि वाक्यपदीये–

**स्वाश्रये समवेतानां तद्वदेवाश्रयान्तरे।**
**क्रियाणामभिनिष्पत्तौ सामर्थ्यं साधनं विदुः॥**[5]

इति कारिकया क्रियायाः आश्रये आश्रयान्तरे वा समवेतानां क्रियाणां सिद्धौ यत् सामर्थ्यं तदेव कारकरूपं साधने प्रतिपादितं विद्यते। तच्च सामर्थ्यं शक्तिरूपमेव प्रतिफलति। शक्तिश्च धर्मविशेषः कर्तृत्त्वादिः अखण्डोपाधिरेव भवति। तत्रा कर्तृत्वशक्तिरूपं सामर्थ्यं स्वाश्रये समवेतानां व्यापाररूपाणां क्रियाणां सिद्धौ साधनं भवति। कर्मत्वशक्तिरूपं सामर्थ्यं तु स्वाश्रये समवेतानां क्रियते इति कर्म इति कर्मन्शब्दव्युत्पत्त्या फलरूपाणां क्रियाणां सिद्धौ साधनं भवति। कर्मत्वादिशक्तिरूपं तु सामर्थ्यम् आश्रयान्तरे अर्थात् स्वाश्रयातिरिक्ते आश्रये समवेतानां क्रियाणां फलरूपाणां व्यापाररूपाणां वा सिद्धौ साधनं भवति। तत्रापि करणत्वं फलरूपाणां क्रियाणां साधनं भवति। तदुक्तम्, भर्तृहरिणैव–

**क्रियायाः परिनिष्पतिर्त्तयद् व्यापारादनन्तरम्।**
**विवक्ष्यते यदा यत्रा करणं तत् तदा स्मृतम्॥**

(वाक्यपदीयम्, तृतीयकाण्डम, सा.समुत्रेशः का.स. 90)

अत्रा क्रिया फलं भवति। सम्प्रदानं तु दातृगतानां व्यापाररूपाणां क्रियाणां साधनं भवति। अश्वात् पतति इत्यादौ अपादानत्वमति परसमवेतानां व्यापाररूपाणाम् एवं क्रियाणां साधनं भवति। अधिकरणत्वं तु पदसमवेतानां फलरूपाणां क्रियाणां साधनं भवति। तदुक्तं तेनैव ---

---

4. लघुशब्देन्दुशेखरः – कारकप्रकरणम्
5. वाक्यपदीयम् – तृतीय काण्डम्, साधन समुद्देशः का.स.01

**कर्तृकर्मव्यवहितामसाक्षाद् धारयत् क्रियाम्।**[6]
**उपकुर्वत्क्रियासिद्धौ प्राचोऽधिकरणं विदु:।।** इत्यादिना

(वाक्यपदीयम्, तृतीयकाण्डम्, सा.समुद्देश: का.स. 148)

अत्रा कारिकायाम् उत्तरार्द्धे क्रियापदेन फलं विवक्षितं विद्यते। तथा च क्रियाया: व्यापाररूपाया: फलरूपाया: वा निर्वृत्तौ अर्थात् सिद्धौ द्रव्यस्य कर्तृत्वकर्मत्वप्रभृति: शक्तिरेव साधनम् इति भाष्यकारप्रभृतय: विदु:। साध्यते अनया क्रिया इति साधनशब्दस्य व्युत्पत्ति:। शक्तिरेव अत्रा आधारपारतन्त्र्येण

अप्रधानत्वात् गुणशब्देन उच्यते। यद् वा अन्यस्मात् अशक्तात् स्वाश्रयस्य भेदकत्वरूपात्। विशेषणरूपाप्रधानसाधर्म्यात् गुणशब्देन उच्यते। लोके कर्ता, कर्म, करणं, सम्प्रदानम्, अपादानम् अधिकरणं चेति षट्कारकाणि प्रसिद्धानि सन्ति। तत्रा कर्तृकर्मकरणाधिकरणेषु चर्तुषु कृधातु: अनुस्यूतो वर्तते, न तथा सम्प्रदानापादनयो:। अत: तयो: न वास्तवं कारकत्वम् अपितु कारकत्वप्रयुक्तकार्यार्थम् औपचारिकमेव।

किं च यथा कर्तृव्यापाराविवक्षायां कर्मकरणाधिकरणानामति कर्तृसंज्ञा भवति। न तथा सम्प्रदानापादानयो:। न हि ब्राह्मणाय ददाति इत्यर्थे ब्राह्मणो ददाति इति प्रयुज्यते न वा ग्रामादागच्छति इत्यर्थे ग्राम आगच्छति इति वा प्रयुज्यते। अतएव सम्प्रदानापादानयो: उपचरितम् एव कारकत्वं विज्ञेयम्। किं च सम्प्रदानापादानयो: व्यापारे धातु:.नैव वर्तते, शब्दशक्तिस्वभावात्। अतएव अपादानस्य अवधिभावेन अवस्थानं व्यापार: प्रकल्प्यते। अथ च सम्प्रदानस्य अनुमत्यादिरूप: व्यापार: कारकव्यपदेशनिमित्तं प्रकल्प्यते।

एवं काशिकावृत्तौ पदमञ्जर्या न्यासे च वामनजयादित्यहरदत्तमिश्रादिभि: कारके इति सूत्राम् अधिकृत्य विवेचितम्। **कारकसंज्ञा अन्वर्थसंज्ञा विद्यते। सा व्यापारशून्यस्य न सम्भवति**। किं च कारकसंज्ञाया: अपादानादिसंज्ञाभि: समावेशो न स्यात्। तत: च ''स्तम्बे रम:'' इत्यत्रा सप्तम्यां श्रूयमाणायां गतिकारकोपपदादितिसूत्राविहित: स्वरो न स्यात्। ''कारके'' इति निर्धारणे सप्तमी। सामान्यापेक्षं च एकवचनम्। कारकशब्दोऽम् ण्वुलन्त:। करोति इति कारकम् इति। अस्त्यव्युत्पन्न: संज्ञाशब्दो निमित्तपर्याय:। तत्र पूर्वस्य ग्रहणेऽपादानादिषु कारकशब्दो न प्रवर्त्तेत, यथा कर्तृशब्द:, तेषामस्वतन्त्रात्वात्। स्वातन्त्र्ये वा पक्षे कर्तृसंज्ञा प्रसज्येत, नैष दोष:। सर्वमेव खलु कारकं यथायथमवान्तरव्यापारं निर्वर्तयत्

प्रधानक्रियायामुपयुज्यते। सा च सकलकारकजन्यफलभूता विक्लित्यादिरूपा क्रिया प्रधानक्रिया। यद्वा -- सामान्यभूता क्रिया प्राधनक्रिया फलजननी नाम, सर्वाणि हि कारकाणि फलजननाय

6. वाक्यपदीयम् - तृतीय काण्डम्, साधन समुद्देश: का.स.148

प्रवर्तन्ते, अतो यद्यत्फलजननरूपं तत्सर्वेष्वेव कारकेष्वविशिष्टम्। किंचित्खलु कारकं केनचिदेव रूपेण फलं जनयतीति फलजनना सर्वेषामभिन्नरूपा। अवान्तरभेदविवक्षायां तु करणादिरूपोन्मेषः।

न च वैशेषिकाणामिवास्माकमेकाक्रिया नानेकत्रा समवेता, धात्वर्थो हि क्रिया, न परिस्पन्द एव। धातुना च सकलकारकानुयाय्योदनादिफलावच्छेदेन एकीकृतो व्यापारोऽभिधीयते। तस्यामेकस्यां प्रधानक्रियायामुपयोगे यथा यथमवान्तरव्यापारमुखेन। यद्यथा - अपादानस्यावधिभावोपगमनं व्यापारः। सम्प्रदानस्य तु परेणानुमत्यनिराकरणादिः, करणस्य काष्ठादेर्ज्वलनादिः, अधिकरणस्य

सम्भवनधारणादिः, कर्मणो निर्वृत्त्यादिः, कर्तुः प्रसिद्ध एव, प्रयोजकस्य प्रेषणादिः। न चैवं सति करणादीनामपि कर्तृसंज्ञाप्रसंगः, परतन्त्रात्वात्। प्रधानेन हि कर्त्रा समवाये करणादीनि परतन्त्राणि, व्यवाये स्वतन्त्राणि। तद्यथा -- अमात्यानां राज्ञा सह समवाये पारतन्त्र्यम्, व्यवाये स्वातन्त्र्यम्। यद्येवम्, कारक - व्यपदेशोऽपि करणाद्यवस्थायां न स्यात् ? करणम् कारकमिति अधिकारसामर्थ्यात्। कारकशब्दोपनीतस्वातन्त्र्यमवस्थान्तरगतं विज्ञास्यते। अवस्थान्तरे यत् स्वतन्त्रां तत्साधकतमं करणमिति कर्तुरेव त्वेकस्य साम्प्रतिकं स्वातन्त्र्यम्। तच्च कर्तृसंज्ञांगतया चोदितम्। यदि तर्हि व्युत्पत्तिपक्षेप्यवस्थान्तरगतमेव स्वातन्त्र्यम्। एवं तर्हि करणाद्यवस्थायां निमित्तभाव एवाभ्युपगतो भवति? यद्येवम्, किं दोषप्रतिविधानव्यसनेन। निमित्तपर्यायस्वयैव ग्रहणमस्त्विति मन्यमान आह --

कारकशब्दश्चेति। कस्य हेतुरिति। द्रव्यगुणविषयोऽपि हेतुः कारकं प्राप्तमित्यभिप्रायः। कारकशब्दोऽयं क्रियाहेतावेव प्रसिद्ध इत्याह - क्रियाया इति। अनाश्रितव्यापारं निमित्तं हेतुः, आश्रितव्यापारं कारकम्। उक्तं च -

**द्रव्यादिविषयो हेतुः कारकं नियतक्रियम्।**
**अनाश्रिते तु व्यापारे निमित्तं हेतुरिष्यतें इति च।**[7]

कथं तर्हि पूर्वमुक्तम् - अनर्थान्तरमिति, न हि सामान्य - विशेषवचनानामनर्थान्तरवाचित्वम्? सत्यम्, सामान्यशब्दयोरपि अर्थप्रकरणादिना विशेषवृत्तिर्माभप्रेत्य तु तथोक्तम्। वृक्षस्य पर्ण पततीति। पर्णविशेषणत्वेनात्रा वृक्षो विवक्षितः, न त्वपायस्य निमित्तत्वेनेत्यपादानसंज्ञा न भवति, न वा अपायस्याविवक्षितत्वात्।

सति हयवधौ गतिरपायो भवति, नान्यथा। न चात्रा वृक्षोवधित्वेन विवक्षितः। तथा हि - वृक्षमजहत्यपि पर्णे वृक्षस्य पर्ण पततीति भवति प्रयोगो यदा वृक्षः छिन्नः पततीति, सत्यम्। अतएव अस्मिन्नतृप्तः सन्नाहमाणवकस्य पितरमिति। अत्रा पितुः सम्बन्धित्वेन माणवको विवक्षितः, न तु प्रश्नक्रियां प्रति निमित्तत्वेनेति कर्मसंज्ञा न भवति, असति तु कारकाधिकारे तस्यापि स्यात्। शेषलक्षणा तु षष्ठी अकथिते दुह्यादिपरिगणनाद्राज्ञः पुरूष इत्यादौ सावकाशा। यदि तर्हि विशेषणमिदम्,

7. वाक्यपदीयम् - तृतीय काण्डम्, साधन समुद्देशः का.स.25

ध्रुवादीनां न संज्ञा, ''कारकाद्दत्तश्रुतयो - रेवाशिषि'' इत्यादौ यत्र कारकशब्दः संशब्ध्यते तत्रापादानादीनां वक्ष्यमाणानां षण्णामेव ग्रहणमिष्यते, तत्रासिद्ध्यति। संज्ञापक्षे तु न दोषः, संज्ञा ह्यावर्तमाना संज्ञिनं प्रत्याययति। स्यादेतत्प्रदेशेष्वपि क्रियानिमित्तपर्यायस्य कारकशब्दस्योपादानम्। तच्च निमित्तमपादानाद्येवेति, तदसत्, नटस्य शृणोतीत्यादौ कारकशेषस्य सम्भवादित्यत आह --

**कारकसंशब्दनेषु येति। कारकग्रहणं प्रदेशेषु स्वर्यते,**
**स्वरितेनाधिकारावगतिर्भवतीति भावः इति पदमंजरीकृतां प्रतिपादनेन।**

तथा ---

**कारकशब्दश्च निमित्तपर्यायः। कारकम्,**
**हेतुरित्यनर्थान्तरम् । कस्य हेतुः क्रियायाः।**

वक्ष्यति ---

''ध्रुवमपाये पादानम्'' ग्रामादागच्छति।

पर्वतादवरोहति।''

कारक इति किम्? वृक्षस्य पर्ण पतति। कुड्यस्य पिण्डः पतति।

इत्यादिकाशिकावृत्तिग्रन्थेन एवं कारकशब्दोऽयमस्त्येव व्युत्पन्नः - ण्वुलन्तः कर्तृपय्र्याय इति।[8] अस्ति च संज्ञाशब्दः - अव्युत्पन्नो निमित्तपय्र्याय इति। तत्रोह यदि पूर्वोक्तस्य ग्रहणं स्यात् तदापादानादिषु कारकशब्दो न वर्तते। यथा - कर्तृशब्दः ''ण्वुल् तृचौ'' इति कर्त्तरि व्युत्पादितः, तथा कारकशब्दोऽपि, कर्त्ता च स्वतन्त्रः। अपादानादयश्चास्वतन्त्राः। तत् कथं तेषु कारकव्यपदेशः स्यात्? असति हि कारकव्यपदेशे कारकसंशब्दनेषु तेषां ग्रहणं न स्यात्। अथ तेषामति कथंचित् स्वतन्त्राताभ्युपेयेत। एवं च तत्रा कर्तृसंज्ञाप्रसज्येत। ताश्च ग्रामादागच्छति,

उपाध्यायाय गां ददातीत्यादौ ग्रामादिभ्यस्तृतीया प्रसज्येत। इतरेतराश्रयश्चापि दोषः स्यात्। तथा हि - कर्तृसंज्ञोत्तरकालं कारकशब्दस्य व्युत्पत्तिः। तस्यां सत्यां कारकशब्दोपक्रमेण कर्तृसंज्ञा स्यात्। वह्वेवं प्रतिविधेयं स्यात्, प्रतिविधाने च प्रतिपत्तिगौरवं स्यात्। निमित्तपर्यायस्य तु कारकशब्दस्य ग्रहणे न दोषः स्यात्। ततः स एव गृह्यत इति मत्वाह - कारकशब्दोऽयं निमित्तपर्याय इति। ग्रामादागच्छतीति। ग्रामस्य ध्रुवस्यागमनक्रियां प्रति निमित्तभावोऽस्ति। यदीह–

ग्रामोऽवधिभावेन अवतिष्ठेत तत आगमनं न निष्पद्येत, तस्माद् ग्रामः कारकम्।

---

8. काशिकावृत्तिः

वृक्षस्य पर्णं पततीति। वृक्षः सम्बन्धित्वेनात्रा विवक्षितः न तु निमित्तत्वेन। अपायस्य कारकग्रहणान्निमित्तत्वेनाविवक्षितस्यापादान संज्ञा न भवति। नैतत् कारकग्रहणस्य प्रत्युदाहरणं युक्तम्। ध्रुवग्रहणेनैवात्रापादानसंज्ञायाःनिवर्तितत्वात्।

ध्रुवं हितद् यदवधिभूतमपाये साध्ये। तथा हि वृत्तिकारो वक्ष्यति – "अपाये साध्ये यदवधिभूतम्" इति। न चेह वृक्षोऽवधित्वेन विवक्षितः। किं तर्हि? सम्बन्धित्वेन, नैतदस्ति, विवक्षितावधिभावस्यैव वृक्षस्य सम्बन्धिभावेन विवक्षितत्वात्। अवधिभूतस्य वृक्षस्य सम्बन्धिनः. पर्णं पततीत्यर्थः। न हि सम्बन्धित्वेन विवक्षावधिभावविवक्षया विरूध्यते। तस्माद्विवक्षितावधिभावस्यैव वृक्षस्य सम्बन्धित्वमात्रां विवक्षितम्। न तु विद्यमानमप्यपायं प्रति निमित्तत्वमिति कात्रायुक्तता इति न्यासग्रन्थेन विज्ञायते क्रियाजनकत्वम् एवं कारकत्वम्। एतेषां कारकलक्षणम् अभिप्रेतं विद्यते।

# प्राच्यचिकित्साविद्यानां यज्ञेष्वन्तर्भावः

## ( आयुर्वेद-ज्यौतिष-योगशास्त्राणाञ्च विशेषसन्दर्भे )

श्रीसन्नीकुमारः

अथ संस्कृतवाङ्मये **शरीरमाद्यं खलु धर्मसाधनमि**[1]त्यादिभिरुक्तिभिः स्वस्थशरीरस्य स्वस्थजीवनस्य च महत्ता सुप्रतिपादिता। आहार-विहारादिषु व्यभिचारात् रोगाणामुत्पत्तिर्भवति। तदा तेषां रोगाणां चिकित्सापूर्वकं स्वास्थ्यं कल्प्यते। चिकित्सापद्धतिषु अद्यत्वे समाजे टीकाकरणमाध्यमेन प्रत्यक्षतया रक्तवाहिनीषु औषधीप्रदानस्य, रासायनिकौषधीनां सेवनस्य च पद्धतिः प्रचलिता वर्तते। निःसदेहम् एतेषां प्रत्यक्षप्रभावो दृश्यते, परञ्च तेषां रासायनिकौषधीनां दुष्प्रभावः कालान्तरे मानवशरीरे दृश्यते, तस्मात् नास्ति श्रेयस्करी पद्धतिरेषा। संस्कृतवाङ्मये कतिपयशास्त्रेषु चिकित्साविषये विभिन्नाः प्राकृतिकप्रकल्पाः प्रदत्ताः। यथा आयुर्वेदे सम्यक् आहारविहारवानस्पतिकौषधीनां प्रयोगेन, ज्यौतिषशास्त्रे ग्रहाणां गति-स्थिति-दृष्ट्यादीनां पर्यालोचनेन, योगशास्त्रे आसन-प्राणयाम-व्यायामादिना, मन्त्र-तन्त्र-यन्त्रविज्ञाने यन्त्रादीनां प्रयोगेन, संगीतशास्त्रे संगीतमाध्यमेन, वास्तुशास्त्रादिषु स्थानशुद्धिना वास्तुदोषान् निरस्य च स्वास्थ्यस्य प्रकल्पना कृतास्ति। चिकित्साविषये सर्वेभ्यः महत्वपूर्णप्रकल्पः यज्ञः वेदेषु प्रत्यक्षतया सम्प्राप्यते। भारतीयसंस्कृतेराधारभूतेषु वेदेषु मानवजीवनस्योद्देश्यभूताः धर्मार्थकाममोक्षाख्याश्चत्त्वारोऽपि पुरुषार्था विवेचिताः, वैदिकवाङ्मये मावनजीवनस्योपयोगिनः सर्वेऽपि विषयाः साधु विवेचिताः। अत्र प्रेयं शास्त्रं श्रेयं शास्त्रञ्चोभयं समभावेन समेधितम्। अत एवात्र भोगमोक्षयोरुभयोः सत्तायाः सकलवाङ्मयापेक्षया विशिष्टता विद्यते। ज्ञानस्य विमला धारा समस्तेऽपि क्षितिमण्डले सर्वास्वपि दिक्षु वेदेभ्य एव निःसृत्य प्रसस्रुः। ज्ञानस्य च सार्थकत्वं तस्य सम्यक् प्रयोगेनैव सिद्ध्यति। वैदिकज्ञानस्य च प्रयोगः यागादिधर्ममाध्यमेन वर्णितः। यथोक्तं लौगाक्षिभास्करेण[2]-

**''यागादिरेव धर्मः, वेदप्रतिपाद्यः प्रयोजनवदर्थो धर्मः''**

अत्र धर्मशब्दः कर्त्तव्यकर्मणि प्रयुक्तः। याज्ञिककर्म न केवलं वातावरणस्य शोधकं भवति अपितु याज्ञिकपुरुषस्य तस्य च परिवारस्य स्वास्थ्यस्य उपकारकमपि। पूर्वोक्तानां आयुर्वेदादीनां सर्वेषां प्राच्यचिकित्साशास्त्राणामन्तर्भावः याज्ञिककर्मणि भवत्येव तथापि प्रमुखरूपेण आयुर्वेद-ज्यौतिषयोः योगशास्त्रस्य च चिकित्सापद्धतीनां यज्ञेषु अर्न्तभावः क्रमशः प्रतिपाद्यते। प्रथमं तावदायुर्वेदः -

1 कुमारसम्भव 5.33

2 अर्थसंग्रह पृ-11

शरीरेण सह प्राणस्य य: संयोग: स एवायुपदवाच्य:। तत्कालावधिरेव प्राण्यायुष्मान् भवति यावच्छरीरे प्राणस्य स्थिति:। प्राणोपगमे हि आयुष उपगम: स एव मृत्यु:, पञ्चभूतावशेषत्वमिति यावत्। अत: शरीरेन्द्रियसत्त्वात्मसंयोग: आयु:, तथा च आयुषो वेद आयुर्वेद:। यथोक्तं सुश्रुतेन[3]–

**''आयुरस्मिन् विद्यते, अनेन वाऽऽयुर्विन्दतीत्यायुर्वेद:''**

आयुर्वेदे च नित्यप्रातरुत्थानादारभ्य रात्रिशयनपर्यन्तम् औषधीनां प्रयोगेन आयु: कल्प्यते। सम्यग् आहार-विहारस्य महत्त्वमायुर्वेदे प्रदीयते। आयुर्वेदे औषधाहारविहाराणामुपयोग: सुखानुबन्ध:। अस्या: समस्ताया: आयुर्वैदिकचिकित्साविद्याया अन्तर्भावो यज्ञविद्यायां भवति। यज्ञेषु अग्नेरुपासना प्रमुखरूपेण क्रियते तथा च अग्नेरुपासनया आयुर्प्राप्तिविषये स्पष्टरूपेण प्रतिपादितम् अथर्ववेदे। यथा[4]– **''आयुरस्मै धेहि जातवेद:''**। यज्ञ: खलु मानवस्वास्थ्योपकारको भवतीत्यस्य आयुर्वैदिकं विवेचनमस्ति यद् यज्ञस्य औषधीयगुणसमायुक्तविशिष्टहवनसामग्र्या: अग्नौ आहुतिप्रदानेन गैसविकिरणादिभि: सह विशिष्टप्रकारकं तेजोऽपि निर्गच्छति। एतेषां गैसविकिरणतेजादीनाञ्च मानवस्वास्थ्ये सकारात्मकप्रभावो भवति। हवनसामग्रीषु औषधीयगुणसमायुक्ता: विशिष्टपदार्था: समाहिता: भवन्ति, तेषामौषधीयगुणानां मानवस्य शरीरे स्थापनस्य सर्वश्रेष्ठसाधनं खलु यज्ञ एव। कथं यज्ञ एव श्रेष्ठतमं साधनमितिशङ्कायां ध्यातव्यमस्ति यद् अद्यत्वे औषधीप्रदानस्य ये प्रचलितोपाया: सन्ति तेषु भोजनेन सार्धं मुखद्वारा औषधीनां सेवनोपाया: प्रमुखा:।। परञ्च यज्ञमाध्यमेनौषधीप्रदानेन न कोऽपि दुष्प्रभावो दृश्यते प्रत्युत प्रत्यक्षसकारात्मकप्रभाव एव। यथा–

**पिङ्गरक्षजायमानं मा पुमांसं स्त्रियं क्रन्।**
**आण्डादो गर्भान्मा दभन्वाधस्वेत: किमीदिन:।।**[5]

अत्रोल्लिखितमस्ति पीतसर्षपान् आहुतिप्रदानेन सम्बन्धितगर्भवतीस्त्रिया: गर्भस्य रक्षा भवति। यज्ञमाध्यमेन औषधीयगुणं नेत्र-श्रोत्र-घ्राण-त्वगादीन्द्रियेभ्य: सम्पूर्णे शरीरे प्राप्यते तस्य च चिरस्थायी सकारात्मकप्रभावो भवति। येन प्रभावेण मनुष्यो रोगमुक्त-दीर्घायुष: प्राप्नोति। याज्ञिकपात्रनिर्माणादिकार्यमपि औषधीयगुणसमायुक्तवृक्षेभ्य: क्रियते। ते च[6]–

**पलाश: खदिर: प्लक्षो वटोऽश्वत्थ उदुम्बर:।**
**कृमुको वरणो बिल्व: शमीगर्भो विकङ्कत:।।**

**काश्मर्य्य: सरल: सालो देवदारुश्च चन्दन:।**
**इमे यज्ञद्रुमा यज्ञे तत्काष्ठै: पात्रनिर्म्मिति।।**

---

3 सुश्रुत सू.-१.१५

4 अथर्व. 2.23.2

5 अथर्व. 8.6.25

6 यज्ञमधुसूदन. पृ,12

एतेषां सर्वेषां यज्ञीयवृक्षाणामौषधीयगुणा अपि प्रोक्ताः। तद्यथा उदाहरणार्थं प्रदर्श्यते खदिरस्य[7]-

**शीतोष्णः खदिरो दन्त्यः कषाय कटुतिक्तकः।**
**अरिमेदो विट्खदिरे कदरः खदिरे सिते॥**

**कदरो हन्ति कण्डूतिं कुष्ठं भूतग्रहं ज्वरम्।**
**मुखरोगं पाण्डुरोगं रक्तदोषं कृमिव्रणम्॥**

यज्ञेषु एतेभ्य औषधीयगुणसमायुक्तेभ्यो वृक्षेभ्यो याज्ञिकपात्राणां निर्माणेन याज्ञिकपुरुषस्य स्वास्थ्यं कल्प्यते। अपि च आयुर्वेदे पयो-दधि-यवागू-घृतादीनां प्रयोगो रोगाणां प्रशान्तये क्रियते। दुग्धस्य महत्त्वं प्रतिपादितं चरकसंहितायां यथा[8]-

**लंघनैः पाचनैर्दोषशोधनैः शमनैरपि।**
**विमद्यस्य कफे क्षीणे जाते दौर्बलस्य लाधवैः॥**

**तस्य महाविदग्धस्य वातपित्ताधिकस्य वा।**
**पयसाऽभिहते रागे बले जाते निवर्तयेत्॥**

एवं पय आदिद्रव्याणां प्रयोगो यज्ञेषु भवति। यथा सोमयागप्रकरणे[9]- **''पयोव्रतं ब्राह्मणस्य, यवागुराजन्यस्य''** इत्येवं हि आयुर्वेदचिकित्साविद्याया अन्तर्भाव यज्ञेषु भवति।

अथ ज्यैतिषशास्त्रस्य। ज्यौतिषशास्त्रानुसारं मानवजीवने रोगाणामुत्त्पतिः सञ्चित-प्रारब्ध-क्रियमाणानां कर्मणामेव विपरिणामेन भवति। जातकस्य जन्मजातरोगाः, वंशानुक्रमेण प्राप्तरोगाः सञ्चितकर्मणः परिणामभूताः भवन्ति। ज्ञात्वैव कृतैः दुष्कर्मभिरुत्पन्नरोगाः क्रियमाणकर्मणः परिणामत्वेन भवन्ति। प्रारब्धकर्मफलविचारः दशामाध्यमेन एवञ्च क्रियमाणस्य विचारः गोचरे प्रश्नकुण्डल्यां वा भवति। पूर्वजन्मनि इहजन्मनि वा कृतानि दुष्कर्माणि रोगरूपेण मानवकलेवरे उत्पद्यन्ते। अतो जन्मजन्मान्तरे कृतैरशुभकर्मभिरुत्पन्नरोगाणां विचारार्थं ज्योतिषशास्त्रं महत्वपूर्णभूमिकां निर्वहति। ज्यौतिषशास्त्रस्य ग्रन्थेषु बहुषु स्थलेषु रोगाणां चर्चा विस्तारेण प्राप्यते। यथा आचार्यकल्याणवर्ममहाभागेन प्रणीतायां सारावल्यां रोगाणां विषये उल्लिखितं यत्-

**सप्ताष्टमषष्ठस्थाः शशिनः सौम्या हरत्यरिष्टफलम्।**
**पापैरमिश्रचारा कल्याणघृतं यथोन्मादम्॥**

एवं जन्मकुण्डल्यां ग्रहाणां दृष्टि-स्थिति-युत्यादीनां परीक्षणं कृत्वा रोगाणां निदानं ज्योतिषशास्त्रे क्रियते। वेदेषु सूर्यादिग्रहाणां वैदिकमन्त्राः पठिताः सन्ति तथा च यस्य ग्रहस्य प्रभावेण जातकः रुग्णः

7 यज्ञमधुसूदन, 14
8 चकसंहिता 25,194.195
9 तै. आ. 2.8

स्यात् तस्य ग्रहस्य वैदिकमन्त्रैः यज्ञानुष्ठानादिभिः रोगाणामुपचारः क्रियते एवमनेन प्रकारेण ज्यौतिषशास्त्रस्य मानवस्वास्थ्योपकारकत्वमपि यज्ञेष्वन्तर्भवति। वस्तुत ज्यौतिषशास्त्रेण रोगाणां निदान एव क्रियते। शास्त्रेऽस्मिन् रोगस्य कारणद्वयमुपलभ्यते, कर्मजः दोषजश्च। कर्मजः यथा कुष्ठकाणत्वादितः, एवं दोषजो वात-कफ-पित्तजन्यविकारः। अस्मिन् शास्त्रे सर्वप्रथमं रुग्णव्यक्तेः फलादेशात् पूर्व तस्यायुर्विषये विचार्यते। यथोक्तं प्रश्नमार्गे[10]–

**पूर्वमायुः परीक्षेत् पश्चाल्लक्षणमादिदेश।**
**अनायुषां तु मर्त्यानां लक्षणैः किं प्रयोजनम्।।**

एवमायुरादिपरीक्षणानन्तरमेव यज्ञानुष्ठानादिविधानं कालगणनया क्रियते। ध्यातव्यमस्ति यत् ज्योतिषशास्त्रस्य प्रादुर्भाव एव यज्ञकालनिर्धारणार्थमेव अभूत। यथोक्तं आचार्यलगधेन-।

**वेदा हि यज्ञार्थमभिप्रवृताः कालानुपूर्व्या विहिताश्च यज्ञाः।**
**तस्मादिदं कालविधानशास्त्रं यो ज्योतिषं वेद स वेद यज्ञान्।।**[11]

यज्ञानां कालविधानं महत्वपूर्णमेकं कार्यम्। यज्ञकालादिविषये विविधाः विधिवाक्याः प्राप्यन्ते यथा ''सायं प्रातर्जुहोति, उदिते जुहोति, अनुदिते जुहोतीत्यादि''। एवं प्राप्ते सति सूर्योदयास्तकालादिविधानार्थं ज्योतिषशास्त्रं प्राप्यते। एवञ्च ज्योतिषशास्त्रानुसारं विहिते काले सूर्यादिग्रहाणां स्थितिः याज्ञिकपुरुषस्य कृते अनुकूला भवति। तस्यामेव स्थितौ विशिष्टहवनीयद्रव्याणामग्नौ आहुतिप्रदानेन अग्न्यां यत् प्रकाशो तेजो वा उत्पद्यते। तस्य च तेजस्य मानवशरीरे सकारात्मकप्रभावो भवति, अपि च तस्य पुरुषस्य सर्वासां व्याधीनां निरासः भवति। तेन च विहितकाले कृतेन यज्ञेन न केवलं कस्याप्येकस्य अङ्गस्य अपितु सम्पूर्णशरीरस्य स्वस्थता कल्पिता भवति यथा यजुर्वेदे-[12]

**आयुर्यज्ञेन कल्पतां प्राणो यज्ञेन कल्पतां चक्षुर्यज्ञेन।**
**कल्पताश्रोत्रं यज्ञेन कल्पतां वाग् यज्ञेनकल्पताम्।।**

आयुर्वेदस्य एवं ज्यैतिषस्य यज्ञेष्वन्तर्भावानन्तरं योगशास्त्रस्य स्वास्थ्योपकारकविधायाः यज्ञेष्वन्तर्भावः प्रदर्श्यते तावत्। योगस्य विषये लोकेषु अनेकाः भ्रान्तयः सन्ति। केचित् जनाः आरोग्यविषयक-नियम-आसन-प्राणायामादीन् योगरूपेण कथयन्ति। नास्ति आसन-प्राणायामादिरेव योगस्य लक्ष्यम्, प्रत्युत योगसाधनायाः निम्नतमसोपान एव। वस्तुतः योगस्तु चित्तस्य वृत्तीनां निरोधं कृत्वा ध्यान-समाधिभिः परमात्मना संयोगः। चित्तस्य आत्मनि स्थितित्वे सति तस्य कार्याणां यदनारम्भः तदेव संयोगः, वैशेषिकदर्शने यथा[13] –

10 प्रश्नमार्ग 9.3

11 याजुषज्योतिषम्, श्लोक-3

12 यजुर्वेदे-अ.18,म.29

13 वैशेषिक सूत्रम्-6.2.16

**''तदनारम्भ आत्मस्थे मनसि शरीरस्य दुखाभावः संयोगः''**

मनसो वृत्तय एव बन्धनमोक्षयोः कारणानि भवन्ति। प्रोक्तञ्च[14]-

**''मन एव मनुष्याणां कारणं बन्धमोक्षयोः''**

एवं मनुष्याणां मानसिकोन्नयने योगशास्त्रस्य महत्वपूर्णं योगदानं दृश्यते। अद्यत्वे समाजे बहवः जनाः मानसिकव्याधिभिः ग्रसिताः सन्ति, तेषां योगसाधनया ध्यानादिभिश्च सर्वेषां मानसिकरोगाणामुन्मूलनं भवति। योगसूत्रग्रन्थस्य प्रारम्भे एव मुनि-पतञ्जलिना उक्तं यथा[15]-

''योगश्चित्तवृत्तिनिरोधः''।

योगशास्त्रस्य अष्टावङ्गानि, तानि च[16]-

**''यम-नियमासन-प्राणायाम-प्रत्याहार-धारणा-ध्यान-समाध्योऽष्टावङ्गानि''**

एतानि च सर्वाणि मानवस्वास्थ्यस्य महदुपकारकाणि। एतेषां यम-नियम-ध्यानादीनामन्तर्भावः यज्ञेषु भवति, यतो हि सोमादियज्ञेषु दीक्षितस्य नियमानां 'नानृतं वदेत्,' न स्त्रीमुपेयात्' इत्यादीनां श्रवणात् योगस्य सत्य-ब्रह्मचर्यादियमानाम् अनुपालनं भवत्येव, ब्रह्मचर्यादीनां लाभाः योगसूत्रे प्राप्यन्ते यथा-**''ब्रह्मचर्यप्रतिष्ठायां वीर्य्यलाभः''** येन च शारीरिकरोगाणां स्वतः एवोन्मूलनं भवति। योगशास्त्रवद्यज्ञेनापि मानसिकरोगाणां निरासः भवति यतोहि मन-बुद्धेः संयोगः एव यज्ञो भवति, यथोक्तं शतपथब्राह्मणे[17]-

**''स जुहोति युञ्जते मन उत युञ्जते धियः इति ......ताभ्यां युक्ताभ्यां यज्ञं तन्वते।''**

'द्रव्य-देवता-त्यागो यागः' इति मीमांसकाः यज्ञस्यार्थं कुर्वन्ति। देवतामुद्दिश्य द्रव्यत्याग एव यागशब्दस्य व्युत्पत्तिः कृता आचार्यैः। अत्र यज्ञशब्दस्य महत्वं योग-याग-त्यागादिशब्देषु निहितमस्ति। यच्च रोग-राग-भोगादीनां प्रतिषेधस्थितिमुत्पादयति। मत्स्यपुराणेऽपि द्रव्य-देवता-हविषां संयोगः यज्ञः कथितः तद्यथा[18]-

**देवानां द्रव्यहविषां ऋक्सामयजुषां तथा।**
**ऋत्विजां दक्षिणानां च संयोगो यज्ञ उच्यते।।**

---

14 ब्रह्मबिन्दूपनिषद्-1-2

15 योगसूत्र .1.2

16 योगसूत्र 2.29

17 श. ब्रा.-3.5.3.11

18 म. पु. 144.44

एवं यज्ञेष्वेव योग-ज्यौतिष-आयुर्वेदादीनां सर्वासां प्राच्यचिकित्साविद्यानामन्तर्भावो भवति। एतानि सर्वाण्यपि शास्त्राणि पृथक्-पृथक् माध्यमेन मानवस्वास्थ्यं साधयन्ति। यज्ञस्तु समग्ररूपेण सर्वेषां शास्त्राणां सम्मिलितभावेन मानवस्वास्थ्योपकारकं भवति। न केवलं योग-आयुर्वेद-ज्यौतिषशास्त्राणां चिकित्साविधाया अपितु संगीत-वास्तुशास्त्रादीनां चिकित्साविधाया अपि यज्ञेष्वन्तर्भावो भवति। यथा वास्तुशास्त्रानुसारं भवनादिनिर्माणकार्ये वास्तुदोषान् निरस्य स्वास्थ्यं कल्प्यते। यज्ञेऽपि वेदिनिर्माणकाले वास्तोः नियमानां अवधानं विधीयते तस्माच्च तस्यां वेद्यां कृतेन यज्ञेन मानवस्य स्वास्थ्यलाभो भवति। यज्ञः स्वस्थजीवनस्य साधनं तेनैव समं मोक्षस्यापि साधनमस्ति। यज्ञेभ्य एव सर्वासां कामनानां पूर्तिर्भवति। यथोक्तं तैत्तिरीयसंहितायाम्[19]-

**''सर्वेभ्य एव कामेभ्यो यज्ञः प्रयुज्यते।''**

**'इति'**

---

19 तै.सं.-2.4.11.2

# संस्कारकर्मसु आरोग्यवृद्ध्युपायानां विवेचनम्

श्रीरा.सुब्रह्मण्यभिडे

## पीठिका

संस्कारो नाम संस्कार्यो यो भवति, तस्य दोषापनोदकः गुणाधानभूतः कश्चन अलौकिकः कार्यक्रमः। संस्कारो नाम कः? इत्यस्मिन् विषये मीमांसाभाष्यकाराः शबरमुनयः एवमाहुः- **"संस्कारो नाम स भवति, यस्मिञ्जाते पदार्थो योग्यो भवति कस्यचिदर्थस्य"**[1] इति। सूत्रभाष्यकाराः शंकराचार्या एवं वदन्ति- 'संस्कारो हि नाम संस्कार्यस्य गुणाधानेन वा स्यात्, दोषापनयनेन वा'[2] इति।

एषां संस्काराणां किं? केन? कथम्? इति, इतिकर्तव्यतां वयं नानाऋषिभिः प्रणीतेषु प्रतिशाखं भिन्नेषु गृह्यसूत्रेषु पश्यामः। तानि च गृह्यसूत्राणि कल्पसूत्रेष्वन्तर्हितानि। तथा च कल्प इति ग्रन्थः श्रौत-शुल्ब-परिभाषा-गृह्य-पितृमेध-धर्मसूत्रैः संयुतो वर्तते।

श्रौतसूत्रेषु अग्निहोत्रादीनि कर्माणि शुल्बसूत्रेषु यज्ञसम्बद्ध-वेदिरचनाकर्माणि, परिभाषासूत्रेषु यज्ञसम्बद्धविशेषविषयाः, कर्मसम्बद्धन्यायाश्च, गृह्यसूत्रेषु मनुष्य-संस्कारादीनि कर्माणि, पितृमेधसूत्रेषु मनुष्यस्य प्राणत्यागानन्तरं देहस्य दहनादीनि और्ध्वदैहिकानि कर्माणि विवृतानि; धर्मसूत्रेषु च सामाजिकव्यवस्थानियमाः विवृताः सन्ति। अस्यैव कल्पग्रन्थस्य पौरुषेयत्वात् स्मृतिरिति नाम चान्वर्थो भवति।

यथा पूर्वं प्रतिवेदं प्रतिशाखं भिन्नानि गृह्यसूत्राणीत्युक्तं तथा नैकानि गृह्यसूत्राणि सन्ति। यथ- ऋग्वेदस्य आश्वलायनेत्यादीनि गृह्यसूत्राणि। कृष्णयजुर्वेदस्य आपस्तम्ब-बोधायन-सत्याषाढ-भारद्वाज-वैखानसादीनि। शुक्लयजुर्वेदे पारस्करादीनि। सामवेदे-खादिरादीनि। अथर्ववेदे कौशिकादीनि।

इमानि गृह्यसूत्राणि अस्माकं भारतीयानां संस्कारसम्बद्धेषु आचारविचारादिषु ज्योतीषि; तथैव भारतीयसंस्कृतेः आधारभूतानि सन्ती विराजन्ते, अर्थात् संस्कारास्तथाभूताः विराजन्ते। एषां संस्काराणां आधारभूता वेदा एव, किन्तु श्रौतकर्मणां वेदानाञ्च यथा अव्यवहितसम्बन्धो भवति तद्वत् साक्षात्सम्बन्धो वेदानां गृह्यसूत्राणां न भवति।

---

1. जै.सू.भा.3.1.3
2. ब्र.सू.भा.1.1.4

**संस्काराणां परमं प्रयोजनम्**

संस्कारो नाम द्विप्रकारः- एकः, वस्तुनि गुणाधानम्, अपरश्च, वस्तुनः दोषापनयनम् ; सर्वेषु गर्भाधानविवाहादिषु संस्कारकर्मसु दोषापनयनं, गुणवत्तासम्पादनं च भवति।

महर्षयः गौतमाः स्वधर्मसूत्रेषु- 'गर्भाधान-पुंसवन-सीमन्तोन्नयन-जातकर्म नामकरणाऽन्नप्राशन-चौलोपनयनम्'[3] इत्यारभ्य, 'दया सर्वभूतेषु क्षान्तिरनसूया शौचमनायासो मंगलमकार्पण्यमस्पृहेति'[4] इति सूत्रपर्यन्तम् आहत्य चात्वारिंशत्संस्कारान् अष्टावात्मगुणांश्च ब्रुवन्तः अन्ते एवमाहुः- **'यस्य तु खलु संस्काराणां एकदेशोऽपि अष्टावात्मगुणाः अथ स ब्रह्मणः सायुज्यं सालोक्यं च गच्छति'**[5] इति। यस्य पुरुषस्य एते चत्वारिंशत्संस्काराः सम्पत्स्यन्ते स पुरुषः अष्टावात्मगुणान् प्राप्नोति, एवं संस्काराणां आत्मगुणसम्पादनं परमं प्रयोजनम् इति संस्कारकर्मणां महत्वमवोचन्। इत्थम् एतैरात्मगुणैर्युक्तः पुरुषो ब्रह्मज्ञानाय कल्पत इति।

**महर्षिणा मनुनाऽपि संस्कारमहत्वं एवमुक्तम्-**

**वैदिकैः कर्मभिः पुण्यैर्निषेकादिद्विजन्मनाम्।**
**कार्यः शरीरसंस्कारः पावनः प्रेत्य चेह च॥**

**गार्भैर्होतकर्मचौडमौञ्जीबन्धनैः।**
**बैजिकं गार्भिकञ्चैनो द्विजानामपमृज्यते॥**[6] इति।

एवं निषेकादिसंस्कारकर्मभिः पूर्वोक्त-गार्भिक-बैजिक-पापान्यपमृज्यन्ते, तथा च पावनः शरीरसंस्कारो जायते।

**पुंसवने आरोग्यवृद्धिविषयकांशाः**

यद्यपि संस्काराणां परमं प्रयोजनं उपर्युक्तप्रकारेण यद्यपि आत्मगुणसम्पादनं, परम्परया ब्रह्मज्ञानाय अधिकारसम्पादनं, तथा गार्भिक-बैजिक-दोषपरिमार्जनम्, इह लोके परलोके च पावनत्वम्, इमे गुणाः सन्ति तथापि प्रकृतं **'संस्कारेषु आरोग्यवृद्ध्युपायाः'** इत्यमुं विषयम् आनुषङ्गिकरूपेण विमृशामश्चेत् आरोग्यविषयकः सम्बन्धो भवत्येवेति ज्ञायते।

तथा च पुंसवनादिषु नाना संस्कारकर्मसु संस्कारार्थं नाना द्रव्याण्युपयुज्यन्ते। तत्र तावत् पुंसवने आपस्तम्बमते फलद्वयसंयुतं वटाङ्कुरं निष्पीड्य तद्रसं पत्न्याः दक्षनासिकायां अपिनयेदिति सूत्रेऽस्मिन्

---

3. गौ.ध.सू.1.8.14
4. गौ.ध.सू.1.8.24
5. गौ.ध.सू.1.8.26
6. म.स्मृ.2.26-27]

उच्यते- **'अनवस्नातया कुमार्या दृषत्पुत्रे दृषत्पुत्रेण पेषयित्वा परिप्लाव्यापरेणाग्निं प्राचीमुत्तानां निपात्योत्तरेण यजुषाङ्ग्रष्ठेन दक्षिणे नासिकाच्छिद्रेऽपि नयति'**[7] इति।

एवञ्च 'पुमांसं जनयति'[8] इति तदुत्तरसूत्रे पूर्वसूत्रोक्तरीत्या क्रियते चेत् सा संस्कृता स्त्री पुमांसं जनयतीत्युच्यते। इदं कर्म पुञ्जननार्थं यद्यप्यस्ति तथापि एतद्रसनिषेवणेन गर्भस्य पुम्भावप्राप्त्या सह गर्भिण्या: आरोग्यप्राप्ति;, गर्भस्य स्थिरत्वं, गर्भपात: यथा न भवेत् तथा करणम्, इत्यादयोऽंशा अपि भवन्त्येव।

एवञ्च अनारोग्येण वा हेत्वन्तरेण वा स्त्री यदि न प्रसूते तर्हि **'क्षिप्रसुवनाख्यं कर्म'** सूत्रकारै: **'क्षिप्रं सुवनम्'**[9] इति निर्दिश्यते। तत्र गर्भिण्या:: प्रसवकाले कदाचित् प्रसवो न भवति चेत् गर्भस्य मातुश्च द्वयोरपि मरणम् सम्भवेत्। यत: इदानीन्तनेऽपि वैज्ञानिके काले सुसन्नद्धोपकरणै: शस्त्रचिकित्सा-निपुणैश्च संयुतासु बृहद्वैद्यशालास्वपि मातु: शिशोश्च अनारोग्यं, मरणम्, इत्यादीनि पौन:पुन्येन दृश्यन्ते श्रूयन्ते च। अस्य परिहाराय सूत्रकारा वदन्ति यत्- अस्पृष्टोदकेन शरवेण यथास्रोतसम् अर्थात् अनुप्रवाहम् प्रवाहाऽविरुद्धमिति यावत्, उदकमाहृत्य, तस्या: शुष्यमाणाया: स्त्रिया: पादयो: **"अध:पुष्पिता'**ख्यामोषधीं निधाय प्रसवपीडया शुष्यमाणां स्त्रियं **'आभिष्ट्वाऽहं दशभिरभिमृशामि दशमास्याय सूतवे'**[10] इति यजुषा उभाभ्यां हस्ताभ्यां तस्या: मूर्ध्नि अभिमृश्य, ताभिरेवाऽऽहृताभिरद्भि: **'यथैव सोम: पवते'**[11] इत्यादिभिस्तिसृभि: तां स्त्रियं सकृदवोक्षेदिति निर्दिशन्ति। यथा- **'अनाप्रीतेनशरावेणाऽनुस्रोतसमुदकमाहृत्य पत्तस्तूर्यन्तीं निधाय मूर्धञ्छोष्यन्तीमुत्तरेण यजुषाऽभिमृश्यैताभिरद्भिरुत्तराभिरवोक्षेत्'**[12] इति।

एवमेव प्रसवानन्तरं कदाचित् जरायु: अर्थात् गर्भप्रावरणं न पतेच्चेत्तदा **'अनाप्रीतेन शरावेण'** इत्यादिविधिना आहृताभिरद्भि: **'एतु गर्भो अक्षत:'**[13] इति मन्त्रद्वयेन तां स्त्रियमवोक्षेदिति सूत्रेणानेन ज्ञायते- **'यदि जरायु न पतेदेवंविहिताभिरेवाद्भिरुत्तराभ्यामवोक्षेत्'**[14] इति।

एवञ्च गर्भिण्या: गर्भस्य च आरोग्यार्थं मरणराहित्यार्थञ्च सूत्रकारैर्महर्षिभि: संस्कारेषु अन्तर्भावतयैव इमे आरोग्यवृद्धध्युपायांशा निरूपिता:। अनेन प्राचीनानाम् ऋषीणामपि आरोग्यवृद्धिविषये महती श्रद्धा आसीदिति च ज्ञायते।

---

7. आ.गृ.14.11
8. आ.गृ.14.12
9. आ.गृ.14.13
10. ए.कां.2.11
11. ए.कां.2.11
12. आ.गृ.14.15
13. ए.कां.2.11
14. आ.गृ.14.15

एतदर्थं विनियुक्तमन्त्रेष्वपि सोऽर्थ एव व्यज्यते। यथा- क्षिप्र प्रसवार्थे- **'यथैव सोमः पवते यथा समुद्र एजति। एवं ते गर्भ एजतु सह जरायुणा निष्क्रम्य प्रतितिष्ठत्वायुषि ब्रह्मवर्चसि यशसि वीर्येऽन्नाद्ये'**[15] इति मन्त्रे यथा सोमः पवते यथा च समुद्र एजति तथा तव गर्भः जरायुणा सह निष्क्रम्य आयुषि ब्रह्मवर्चसि यशसि वीर्ये अन्नाद्ये प्रतितिष्ठतु इति। द्वितीयेऽपि **'ऐतु गर्भो अक्षतो जीवो जीवन्त्याः। आयमनीर्यमयत गर्भमापो देवीः सरस्वतीः'** इति मन्त्रे 'जीवन्त्यास्तव जीवो गर्भः अक्षतः सन्नागच्छतु। आयमनीः= गर्भस्याकर्षिण्यो (हे) आपो देवीः। सरस्वत्यः! इमं गर्भं यमयत' इति।

अत्र **'आयुषि' 'अन्नाद्ये' 'जीवन्त्याः' 'अक्षतः' 'यमयत'** इत्यादिभिः पदैः आरोग्यवृद्धिविषयकविषय एव सूच्यते।

जरायुपतनार्थमन्त्रे **'ऐतु गर्भो अक्षतो जीवो जीवन्त्याः। तिलदेवपद्यस्व........ शुने जराय्वत्तवे'** ति मन्त्रे च भावोऽयं वर्तते यत्- हे! तिलदे! (जरायुनामैतत्) अवाक्पत। न हि त्वं नाप्युदरम्। स्थूलभूता अविकलैव अवाक्पत, न मांसेषु बद्धासि, न स्नावसु, नापि मज्जसु, मांसादिषु एकदेशेनापि लग्ना मा भूदित्यर्थः। सुखवद्यथा तथा जरायु निर्गच्छतु शुनो भक्षणाय इति।

अत्र जराय्योः सुखेन बहिर्निष्क्रमणार्थं कृतेन प्रयत्नेन गर्भिण्याः मरणाद्यनिष्टद्वारा आरोग्यवृद्धिविषयकोऽशः सूचितो भवति।

अस्मिन्नेव पुंसवनप्रकरणे बोधायनेन **'अस्मे देवासो वपुषे चिकित्सत'**[16] इति चतसृभिः ऋग्भिः संस्कार्यायाः पत्न्याः सुखे हुतशेषाज्यस्य प्रच्योतनं विधीयते[17] तत्रापि तद्विनियुक्तमन्त्रेषु 'अस्मे देवासो वपुषे चिकित्सत' 'पीवर्यस्य जाया पीवानः पुत्रा अकृशासो अस्य' 'सुमखस्यमानः' 'आशीर्म ऊर्जमुत सुप्रजास्त्वमिषं दधातु' इत्यादिभिर्मन्त्रवर्णैरवश्यं आरोग्यवृद्ध्यपेक्षाबुद्ध्या आरोग्यवृद्धिविषयकविषयः सूत्रकारैर्निहित एव।

अत्र प्रसङ्गात् जाया इत्येतेषां पदानां विवरणे विद्यारण्यवाक्यमुल्लिख्यते- पीवरी = पुष्टसर्वावयवा भवतु,............ पुत्राः पीवानः= पुष्टसर्वाङ्गाः, अकृशासः = कदाचिदपि व्याध्यादिजनितकार्श्यरहिताः सन्तु' इति। [स्पष्टोऽर्थः] सुमखस्यमान इत्यत्रपि शोभनं यज्ञं कर्तुं इच्छन्निति। यज्ञं कर्तुं आयुर्भवेत्। आयुषः हेतुः आरोग्यम्। एवं एषु मन्त्रेषु कुटुम्बस्य सर्वेषां आरोग्यवृद्ध्युपायविषयः स्पष्ट एवं।

कृष्णयजुर्वेदस्य अपरो गृह्यसूत्रकारः सत्याषाढोऽपि पुंसवनप्रकरणे पत्नीमुखे यवसर्षपयोः, अथ वा यवमाषयोर्वा दधिद्रप्सेन साकं प्राशनं विधाय, पुनः पत्न्याः दक्षिणनासिकाच्छिद्रे प्राणयनविषये विकल्पेन द्रव्यचतुष्टयं विधत्तें। यथा- **'न्यग्रोधशङ्गं वा घृतेन, कोशकारीं वा प्रैयङ्गवेण संयवेन,**

---

15. ए.कां.2.11
16. तै.सं.3.2.8
17. बो.गृ.1.9.6

**यूपशकलं वोत्तरपूर्वस्याग्निष्ठाश्रे:, अग्निं वा निर्मन्थ्य, सोरुमूलोपधानायै दक्षिणे नासिकाच्छिद्रे प्रणयेत्'**[18] इति।

अत्र उक्तरीत्या एषां द्रव्याणाम् विनियोगेन गर्भिण्या: आरोग्यवृद्धि:, गर्भस्थिरत्वं, गर्भारोग्यञ्च भवतीत्यभ्यूहितुं शक्यते। यत: ज्ञानिनो महर्षय: गर्भिण्या: स्त्रिया: सर्वतोमुखीं वृद्धिं काङ्क्षन्त एवं विदधति।

अत्र गर्भिण्या: गर्भस्य च आरोग्यविषये प्रयोगेन संसाधयद्भि: आधुनिकै-र्विज्ञानिभि: सूत्रोक्तस्य 'घृतसंयुत-न्यग्रोधशृङ्गरसस्य, प्रियङ्ग्वोदनस्रावमिश्रितस्य कौशेय-कोशकर्तु-क्रिमिरसस्य, यूपैकादशिन्याख्य-श्रौतयागविशेषे ईशान्ययूपस्य, अग्निष्ठाश्रि-शकलचूर्ण-रसस्य च किं प्रयोजनम्? क: सम्बन्ध:? इत्यादिषु विषयेषु प्रयोग: क्रियते चेत् लोकस्य महानुपकारो भवतीत्यत्र संशीतिलेशोऽपि नास्ति।

**सीमन्तोऽयने आरोग्यवृद्धिविषय:**

एवं पुंसवनवत् सीमन्तोन्नयनसंस्कारकर्मणि आपस्तम्बमते 'त्रेण्या शलल्या त्रिभिर्दर्भपुञ्जीलै: शलालुग्लप्सेनेत्यूर्ध्वं सीमन्तमुन्नयति'[19] इत्यस्मिन् सूत्रे गर्भिण्या: सीमन्तोन्नयनकाले उदुम्बरफलस्तबकेन, दर्भपुञ्जीलेन, त्रिषु स्थलेषु श्वेतवर्णयुक्तेन वराहकण्टकेन च एवं द्रव्यत्रयेण सीमन्त: उन्नीयते।

यद्यपि मीमांसकदृष्ट्या 'कर्मणा अदृष्टार्थो जायते' चेदपि, अत्र गर्भावस्थाकाले गर्भिण्या: गर्भस्य च आरोग्यवृद्धिदृष्ट्यैव महर्षिभि: अयं क्रम: समन्त्रकं उपपादित इत्यनुमीयते। तथैव **'यवान् विरूढानाबध्य'**[20] इत्यत्र च गर्भिण्या: कण्ठे विरूढयवमालाबन्धनञ्च क्रियते। क्रमेणानेन गर्भिण्या: गर्भस्य च आरोग्यविषयक: सम्बन्धो भवेदित्यभ्यूह्यते। यत: संस्कारकाले एतादृशै: द्रव्यविशेषै: यदा संस्कारो भवति तदा तासां मुखे आन्तरङ्गिक: कश्चन विपरिणामविशेषो दृश्यते।

कृष्णयजुर्वेदस्य अन्य: सूत्रकार: बोधायनोऽपि स्वगृह्यसूत्रे **'अथास्यै यवप्रसूनान्याबध्नाति'**[21] इति अन्तर्वन्तीकण्ठे यवप्रसून-मालाबन्धनं विधत्ते। एवं कथञ्चित् गर्भिण्या: यवसम्बन्धेन तस्या आरोग्यस्य वृद्धि:, पुष्टिश्च भवतीत्यनुमीयते।

एतादृशद्रव्यविशेषै: गर्भिण्या: स्त्रिया: आरोग्यादीनां वृद्धि: कथं भवति? अथ वा एतादृशद्रव्यविशेषै: प्रयोजनं किमिति आधुनिकै: रसायनशास्त्रज्ञै: प्रयोगनिष्णातृभि: विज्ञानिभि: सोपकरणं प्रयोग: यदि प्रवर्त्यते तदा लोकोपकार:, सर्वजनानां आदर: श्रद्धा च वरीवर्धते।

---

18. स.गृ.20.1.9
19. आ.गृ.14.3
20. आ.गृ.14.7
21. बो.गृ.1.10.8

आश्वलायनचार्योऽपि स्वसूत्रानुसारं पुंसवन-सीमन्तोन्नयन-विष्णुबल्यादीनि संस्कारकर्माणि गर्भवृद्ध्यै, सुपुष्टये, गर्भबाधा-निवृत्यर्थं, सुखसूत्यर्थम्, इति वदिष्यन् कानिचन विशेषान्तराणि कथयति-

**पुंसवे मन्त्रमाहात्म्याद्वेत्ति प्राग्जन्मसन्तती:।**[22] इति,

**तथैव-**

**पत्न्याः प्रथमजं गर्भमत्तुकामाः सुदुर्भगाः।**
**आयान्ति ताश्च राक्षस्यो रुधिराशनतत्पराः॥ इति,**[23]

पुनश्च-

**अलक्ष्म्यो दुर्भगाः क्रूराः राक्षस्यः पिशिताशनाः।**
**सम्प्रगृह्य तु पीड्यन्ते पीडयन्ति विशेषतः॥**
**तासाञ्च तादृशी वृर्त्तिर्ब्रह्मणा विहिता पुरा।**
**तस्मात् प्रथमगर्भस्य सीमन्ताख्यो विधीयते॥ इति।**[24]

एवं उपर्युक्तप्रकारेण रुधिराशन-तत्पराणां राक्षसीनां पीडानिवृत्यर्थं अर्थात् गर्भस्य गर्भिण्याश्च आरोग्यवृद्धये, पुष्ट्यै च पुंसवनसीमन्ताख्यौ संस्काराविमौ विहितौ।

एवमेव आश्वलायमनते विष्णुबलिसंस्कारेणापि आरोग्यवृद्धिः पुष्टिश्च भवतीति तद्वचनेन ज्ञायते, यथा-

**तथा विष्णुबलिश्चापि गर्भवृद्ध्यै सुपुष्टये।**
**प्रतिगर्भं बलिः कार्यः सीमन्तश्च प्रशस्यते॥**

**अकृतश्चेद्भवेद्दोषः कृते पुष्टिं समृच्छति।**
**गर्भबाधानिवृत्यर्थं सुखसूत्यर्थमेव च।**
**महादोषनिवृत्यर्थं बलिः कार्यो यथाविधि। इति।**[25]

अत्र गर्भस्य वृद्धिः, गर्भस्य पुष्टिः, गर्भबाधानिवृत्तिः, सुखसूतिः, महादोषनिवृत्तिः, इत्यादिभिः पदैः आरोग्यवृद्धयुपायांशाः सूच्यन्ते।

**जातकर्मसंस्कारे आरोग्यवृद्धिविषयः**

जातकर्मणि आपस्तम्बमते शिशोः हिरण्येन मधु-घृतप्राशनम्, कांस्येन दधि-घृतप्राशनम्, मातुः

22. आश्व.स्मृ.11.61
23. आश्व. स्मृ. 11.62-63
24. आश्व.स्मृ. 11.64-66
25. आश्व.स्मृ. 11067-68

दक्षिणस्तनपायनम्, फलीकरणमिश्रितैः सर्षपैर्होमः, दशादिनपर्यन्तं तदग्नेः रक्षणम्, यदा यदा सूतिकागृह-सम्बद्धस्त्रीजनैः सूतिकागृह-द्वारप्रवेशः क्रियते तदा तदा तूष्णीं फलीकरण-मिश्रितसर्षपाणां होमः, इमानि कर्माणि प्रधानतया भवन्ति। अस्मिन् विषये मनुनाप्येवं स्मर्यते-

**प्राङ्नाभिवर्धनात्पुंसो जातकर्म विधीयते।**
**मन्त्रवत्प्राशनं चास्य हिरण्यमधुसर्पिषाम्॥**[26] इति।

अत्र जातकर्मणि मातृस्तन्यपानात् पूर्वमेव शिशोः मधुघृतयोः हिरण्येन, दधिघृतयोः कांस्येन प्राशनं क्रियते। एतेन पात्रविशेषेण प्रकृतिभूतेन तत्तद्व्यप्राशनेन शिशोः आरोग्याभिवृद्धिः, देह्स्य अपेक्षिताः शक्तिः, पुष्टिः, बलम्, इत्यादीनि अवश्यं भवन्ति।

अत्र आश्वलायनाचार्यः नैकान् विशेषांशान् वदन् रक्षायाः आयुषश्च, अर्थात् आरोग्यस्य विवृद्ध्यर्थं इमानि कर्माणि निरुपयति-

**गर्भाम्बुपानदोषाणामपनुत्त्यै शिशुं पिता।**
**पाययेन्मधुना सार्धं साज्यं हैमरसं शुभम्॥**

**मन्त्रेण कर्णयोः स्वर्णस्पर्शनादेव तच्छिशोः।**
**मन्त्रश्रवणयोग्यत्वं स्याच्च दुर्वासतः शुचिः॥**

**मन्त्रालम्भनमात्रेण शुचिः स्यान्मलवासतः।**
**रक्षायुषोर्विवृद्ध्यर्थमाजिघ्रति पिता सुतम्॥** इति।[27]

इतः पूर्वं केभ्यश्चन वर्षेभ्यः पूर्वं एका प्रथा आसीत्, या च शिशुजननात्परं आरम्भदिनेषु हरिद्रावर्णयुत-स्तन्यमायाति, तन्न पिबेदिति। परन्तु दैवात् सर्वे वैद्याः तामपप्रथां शनैः शनैरपानुदन्त; अपि च तदेव स्तन्यं आवश्यं पाययेदिति, तेनैव जातस्य शिशोः रोगावरोधशक्तिः, आरोग्यं पुष्टिः, बलञ्च भवन्तीति प्रयोगोपकरणैः परिशील्य दृढमूचुः।

अयमेवांशः नाभिच्छेदनात् पूर्वमेव कर्तव्ये जातकर्मसंस्कारे भूतभविष्यद्वर्तमान-कालज्ञानिभिः महर्षिभिः सूत्रकारैः विहितः। तदर्थमन्त्रेऽपि सोऽर्थ एवास्ति। स च स्तन्यपायनमन्त्रः एवं वर्तते- **'अयं कुमारो जरां धयतु दीर्घमायुः। यस्मैत्व स्तन प्रप्यायायुर्वर्चो यशो बलम्'।** [ए.कां.2.13] इति।

अत्र हरदत्तः विवृणोति यत्- **'अयं कुमारः जरां=दीर्घमायुः स्तनव्याजेन धयतु।**

**स्तन्यं पिबन् आ जरसं जीवतु इत्यर्थः। हे स्तन! त्वं च क्षीरव्याजेन आयुः, वर्चः, यशः, बलम् इत्यादीनि प्रप्याय= प्रक्षर'** इति।

---

26. म.स्मृ. 2.29
27. आश्व. स्मृ. 11.89-91

एवं मन्त्रे केवलं क्षीरपानेनैव शिशोः आयुरादिकम् अर्थात् आयुषः कारणं आरोग्यञ्च भवेदिति स्पष्टतः ज्ञायते।

अग्रे भूमौ संविष्टस्य अभिमर्शने 'नामयती'त्ययं मन्त्रे विनियुज्यते। तत्र मन्त्रार्थः एवं भवति– 'यत्र वयं मन्त्रमुच्चारयामः, यत्र च मन्त्रपूर्वकं अभिमृशामः, तत्राऽयं संविष्टः कुमारः नामयति न व्याधितो भवति इति, लोडर्थे लट्, नाऽऽमयतु इति। अत्र नामयति इति पदेन आरोग्यवृद्धिरेव सूच्यते। एवं शिशोः शिरस्तः उदकुम्भनिधानमन्त्रे हे आपः। रक्षांसि निर्णुदध्वम् इति, तथा फलीकरणमिश्रितसर्षप-होमार्थं विनियुक्तेष्वष्टसु मन्त्रेषु, भूत-प्रेत-पिशाच-राक्षसादीनां दुष्टशक्तिबाधा-निवारणपुरस्सरं आरोग्याकाङ्क्षारूपमभयं याच्यते। यतः अनारोगयं, मरणम्, इत्यादीनि अनिष्टानि केनचिद्वा हेतुना सम्भवेयुः। मन्त्रोक्तानामनिष्टानां निवरणं भवति चेत् अर्थात् आरोगयस्य वृद्धिः, तद्द्वारा बलस्य, पुष्टेः, आयुषश्च वृद्धिः सिद्धा एव।

अन्यच्च कुमारप्राशनार्थं सुवर्णेन मधुघृते, कांस्येन दधिघृते उपयुज्येते। किञ्च इमान्येव द्रव्याण्युपयुजय अन्यैः सूत्रकारैः मेधाजननाख्यं कर्म विधीयते। अहमत्राभिप्रैमि यत्-पात्रविशेष-प्रयुक्तद्रव्यविशेषेण भौत्किपदार्थेन आदौ आरोग्यवृद्धिर्भूत्वैव पश्चात् मेधाधारणादीनि सिद्ध्यन्तीति। यतः भौतिकः पदार्थः आदौ भौतिकतया रसरक्तादिरूपेण परिणमय्य अभौथ्तकानि मेधादीनि जनयेत्। विना आरोग्य मेधादीनि कथं सिद्ध्यन्ति? अतः पात्रविशेषसहित-मध्वादिप्राशनेन अवश्यं आरोग्यवृद्धिर्भवत्येव।

तथा फलीकरणमिश्रित-सर्षपहोमेन सूतिकागृह-परिसरस्य रोगसम्बद्धसूक्ष्माणवः नष्टा भवन्तीत्यनुमीयते। यतः प्रथमदिने समन्त्रक होमो भवति।ततः परं दशदिनर्यन्तं प्रतिद्वारप्रवेशं सूतिकागृह-सम्बद्धस्त्रीजनैः तद्द्रव्येणैव अमन्त्रकं होमः क्रियते। अनेन ज्ञायते यत्र दशदिनपर्यन्तं फलीकरणमिश्रित-सर्षपहोमेन रोगकारकसूक्ष्माणूनां नाशः, सूतिकागृह-परिसररक्षणम्, इत्यादिना सूतिकायाः शिशोश्च आरोग्यवृद्धिः भवत्येव। एवञ्च दशदिनपर्यन्तं अग्निरक्षणेन सूतिकागारे उष्णतानिर्माणम्, तेन च शीतादिना यदनारोग्यं भवति तन्निवारणम्, इत्यादिना आरोग्यवृद्ध्युपाया बहवश्चिन्तिताः संस्कारेषु इत्यवगम्यते।

एवञ्च पात्रविशेषेण मध्वादिप्राशनेन, शिरस्तः उदकुम्भनिधानेन, शिशोः आरोग्यादीनां लाभो भवति वा? तथा फलीकरणमिश्रित-सर्षपहोमेन रोगाणूनां नाशः, सूतिकागृह-परिसररक्षणं इमानि कार्याणि भवन्ति वेत्यत्र सप्रयोगं वैज्ञानिकैः परामृश्यते चेत् इतोऽपि महत्वपूर्णानंशान् लोकः ज्ञास्यतीति दृढो विश्वासो मे भवति।

**नामकरणान्नप्राशनयोः आरोग्यविषयः**

सूत्रकाराः आपस्तम्बाः नामकरणविषयं यद्यपि बहुधा न वदन्ति तथापि नामनाधानं, नामलक्षणम्,[28]

---

28. आ.गृ.15.8.11

इति, अंशद्वयं निगद्य, ततः प्रवासादागतः पिता किं कुर्यादिति भणन्त्यनेन सूत्रेण- **'प्रवासादेत्य पुत्रंस्योत्तराभ्यामभिमन्त्रणं मूर्धन्यवघ्राणं दक्षिणे कर्ण उत्तरान्मन्त्रान् जपेत्'**[29] इति।

अत्र सूत्रे उत्तरान्मन्त्राम् जपेत् इति भणितम्। इमे च उत्तरे मन्त्राः **'अग्निरायुष्मान्त्स वनस्पतिभिर्ज्ञरायुष्मान्'** इति पञ्चभिः पर्यायैः वक्तव्या भवन्ति। अत्र प्रत्येकस्मिन् मन्त्रेऽपि **'त्वाम् आयुष्मन्तं दीर्घायुं करोमि'** इति पदेन पिता पुत्रं शिशुं आरोग्यवन्तं करोति। **आयुषः कारणम् आरोग्यमिति सुविदितमेव।** अत्र मन्त्रे- **यथा अग्निः वनस्पतिभिः आयुष्मान्, सोमः ओषधीभिः यथा आयुष्मन्तो भवन्ति तथा तत्तद्विशेषायुर्भिः अर्थात् अभिवर्धमानैः अग्नि-सोम-यज्ञ-वेद-वेदानां आयुर्भिः त्वाम् आयष्मन्तं करोमीति मन्त्रभावेन अत्र आरोग्यवृद्ध्युपायः सूच्यत एव।**

तथा अन्नप्राशनकर्मणि **'भूरपां त्वौषधीना रसं प्राशयामि शिवास्त आप ओषधयस्सन्त्वनमीवास्त आप ओषधयस्सन्तु ( असौ )'**[30] इति मन्त्रः सानुषङ्गः विनियुज्यते। अत्र **'अनमीवा'** इति पदेन दधि-मधु-घृत-सहितान्नभक्षणात् तव अरोगत्वं, आरोग्यहेतुत्वञ्च भवतु इति आरोग्यवृद्धयुपाये साक्षादंशः लभ्यते।

किञ्च सूत्रकारोक्तप्रकारेण दधिमधुघृतसहितोदनभक्षणेन शिशोः को लाभः? किं प्रयोजनम्? इत्यत्र विज्ञानिनः प्रयोगेण विज्ञायं तत्फलितांशं लोकार्पणं कुर्वन्त चेत् तदा लोकोऽयं उपकृतो भवतीति दृढं विश्वसिमि।

**चौलकर्मणि आरोग्यवृद्ध्युपायाः**

चौलकर्मणि प्राधान्येन होमानन्तरं केशवपनं भवति। चौलकर्मण अपरं नाम **'आयुष्कर्म'** इति। उक्ते काले यदि क्रियते तर्हि आयुषो वृद्धिः, अन्यथा आयुषः क्षयो भवति, अर्थात् आरोग्यस्य वृद्धिः, आरोग्यस्य क्षयः इति यावत्। अत्र मित्रमिश्राः वसिष्ठवाक्यमुदाहरन्ति यथा-

**'चौलेनैवायुषो वृद्धिः चौलेनैवायुषः क्षयः'**।[31] इति।

एवञ्च संवत्सरे चौलकरणेन आयुष्यं अर्थात् आरोग्यवृद्धिर्भवतीति इदं वचनं स्मारयति-

**'संवत्सरे तु चौलेन आयुष्यं ब्रह्मवर्चसम्'**। इति[32]।

श्रुतावपि इमे केशाः मृतत्वचः अपवित्राः, अतः इमां मृतत्वचं अमेध्यां अपहत्य पवित्रो भूत्वा परित्रमुपैतीति कथ्यते यथा- **'यत्केशश्मश्रु मृतामेव त्वचममेध्यामपहत्ययज्ञियो भूत्या मेधमुपैति'** इति।

---

29. आ.गृ. 15.12
30. ए.कां. 2.14
31. वी.मि.पृ. 296
32. ध.को.सं. 3 भा. 1 पृ. 2906
33. तै.सं.6.1.1

तथा प्रयोगग्रन्थेष्वपि वपनसमये अयं श्लोकः दृश्यते–

**मेरुमन्दरतुल्यानि पापानि विविधानि च।**
**केशानाश्रित्य तिष्ठन्ति तस्मात् केशान्वपाम्यहम्॥**[33]

एवं पापानामपनोदनेन तत्कार्यं अनारोगयमपि दूरमिव। अनारोग्यस्य दूरीकरणेन आरोग्यस्य वृद्धिरवश्यं भवत्येव।

अत्र आयुषः अर्थात् आरोग्यस्य वृद्धिः चूडाकर्मणा भवतीत्यत्र स्मृतिसङ्ग्रहवाक्यमुदाहरति संस्काररत्नमालाकरः भट्टगोपीनाथः–

**'बलायुर्वर्चोवृद्धिश्च चूडाकर्मफलं स्मृतम्'**[34] इति।

अत्र आश्वलायनाचार्येण उच्यते यत्–

**लोम्नां सञ्छेदनादायुः क्षीयते तत्प्रवृद्धये।**
**मन्त्राश्चोदाहृता येनावपदित्यादयस्तथा॥**[35] इति।

अत्र येनावपदित्यादयो मन्त्राः आरोग्यवृद्धिविषये कमर्थं वदन्तीति विमृशामः। प्रथमं तावत् चौलकर्मणि शीतास्वप्सु उष्णजलानयनानन्तरं शिरसि अद्भिरुन्दनं भवति 'आप उन्दन्तु' इत्यनेन मन्त्रेण। तत्र तावदय मन्त्रो वदति यत् **आपः कुमारस्यास्य शिरः जीवसे = जीवितं जीवितुं जीवनाय, दीर्घायुत्वाय, दीप्तये, ज्योक् = दीर्घकालं, सूर्यं द्रष्टुम्, उन्दन्तु = क्लेदयन्तु इति।**

एवं प्राग्वपनमन्त्रे उत्तरार्थे 'तेन ब्रह्माणो वपतेदमस्यायुष्माञ्जरदष्टिर्यथासदय-मसौ'[36] इत्यत्र यथा वपने सति अयं माणवकः आयुष्मान् जरदष्टिः जीर्णाशनः, अथ वा जरावस्थां प्राप्नोति, जरावस्थापर्यन्तं जीवति, अर्थात् दीर्घायुर्भवति तथा वपतेति पूर्वत्रान्वयः।

तथा दक्षिण-पश्चिमोत्तर-वपन-मन्त्रेषु 'तेनास्यायुषे वप' 'येन भुयश्चरात्ययं ज्योक्च पश्याति सूर्यम्' 'तेन ते वपाम्यसावायुषा वर्चसा यथा ज्योक्सुमना असाः' 'मास्यायुः प्र मोषीः' इत्यादिभिः मन्त्रस्थपदैः यद्यपि आयुष्यं दीर्घायुत्वं उच्यते चेदपि एतयोः निदानं आरोग्यं भवतीत्यतो हेतोः अत्र आतोग्यवृद्धिः सूचिता भवति।

तत्र इमे वपनमन्त्राः यत्र यत्र वपनं भवति तत्र सर्वत्र एषां मन्त्राणां अर्थस्य प्रयोजनं भवति, यथा उपनयने, गोदानकर्मणि, समावर्तने, अन्येषु कर्मसु च।

---

33. आ.अ.प्र.पृ. 26
34. सं.र.मा.पृ.6
35. आश्व.स्मृ. 11.17
36. ए.कां. 2.1

एवं उपनयनादिकर्मसु एषां मन्त्राणां अर्थाकर्षणात् तत्रापि आरोग्यादीनां प्रयोजन भवतीति ज्ञेयम्।

इतोऽपि उपनयनादिषु बहुषु संस्कारकर्मसु आरोग्यवृद्धिसम्बद्धविशेषांशाः भवन्त्येव। तत्र उपनयनहोमे समिदाधानमन्त्रे 'घृतं पिवन्नमृतं चारु गव्यं पितेव पूत्रं जरसे नयेमम' इत्यत्र हे अग्ने! यथा पिता पुत्रं सर्वप्रकारेण दीर्घमायुः प्रापयति तद्वत् त्वं यथा अयं माणवकः दीर्घायुर्भवति तथा कुरु इति अग्निं प्रार्थयते।

एवं वाससां अभिमन्त्रणपपरिधापनादिषु केषुचन मन्त्रेषु बहवः आराग्यवृद्ध्युपायांशाः सूच्यन्ते। यथा 'तास्त्वा देवीर्जरसे संव्ययन्त्वायुष्मानिदं परिधत्स्व वासः' 'परिधत्त धत्त वाससैनꣳ शतायुषं कृणुत दीर्घमायुः' 'जराङ्गच्छसि परिधत्स्व वासः' 'शतञ्च जीव शरदस्सुवर्चाः' 'शतञ्च जीव शरदः पुरूचीर्वसूनि चार्यो विभजासि जीवन्'[37]

तथैव होममन्त्रेषु 'मा नो मध्या रीरिषतायुर्गन्तो' इति, 'अग्निष्ट आयुः प्रतरां दधातु'[38] इति च मन्त्रयोः, अग्निः माणवकस्य तव प्रकृष्टतरम् आयुः, प्रकृष्टतरां पुष्टिञ्च ददातु, इन्द्रश्च मरुद्भिः वसुभिः आदित्यैः सम्भूय ऋतावृतौ पृष्टिं कृणोतु इति प्रार्थयते आचार्यः।

प्रायेण मनुष्याः ऋतावृतौ आरोग्यहीनाः भवन्ति। तन्निवारणाय कृतयाऽत्र प्रार्थनया आरोग्यवृद्धिः सूचिता भवति।

एवं समावर्तने 'अन्नाद्याये'ति दन्तधावनमन्त्रे, 'अपाशोसी'ति ग्रीवासु सुवर्णमणिधारणामन्त्रे 'दीर्घायुत्वम्' 'अन्नाद्यत्वम्' 'प्रशस्तजीविकात्वम्' इत्यादयो बहवः आरोग्यवृद्ध्युपयांशाः लभ्यन्त एव।

विवाहेऽपि 'दीर्घायुरस्तु मे पतिर्जीवातुशरदः शतम्' 'दीर्घायुरस्या यः पतिस्स एतु शरदः शतम्'[39] इति, 'यर्थनयोर्न प्रमीयाता उभयोर्जीवतोः प्रज्ञाः' 'मया पत्या प्रजावती सञ्जीव शरदः शतम्' 'त्वष्टा सहस्रमायूꣳषि दीर्घमायुः कृणोतु वाम्'[40] 'इह प्रियं प्रजया ते समृद्ध्यताम्'[41] इत्यादिभिर्बहुभिर्वाक्यैः बहुत्र आरोग्यवृद्धिविशेषाः निरूपिताः।

एवं संस्काराणां परमं लक्ष्यं पीठिकायां उक्तरीत्या आत्मज्ञानसम्पदानाय योग्यतासम्पादनं यद्यप्यस्ति; आहोस्वित् गुणाधानाय दोषापनोदनाय च यद्यपि संस्काराः सन्ति, तथापि 'संस्कारेषु आरोग्यवृद्ध्युपायाः' इत्यनया नूत्नया दृष्ट्या तत्र मन्त्रार्थविमर्शनपुरस्सरं आरोग्यसम्बद्धविष्टांशा विचारिताः।

---

37. ए.कां. 2.2
38. ए.कां. 2.4
39. ए.कां. 1.5
40. ए.कां. 1.8
41. ए.कां. 1.9

**उपयुक्तग्रन्थानां सूची**

1. जैमिनिप्रणीतं मीमांसादर्शनम् vol-3 second edition-1992 आनन्दाश्रम, पूना
2. ब्रह्मसूत्रभाष्यम् vol-1 Third Edition अध्यात्मप्रकाशकार्यालय: Holenaraseepura Karanataka
3. गौतमधर्मसूत्रम् Third Edition-2000 चौखम्बा संस्कृत संस्थान वाराणसी
4. आपस्तम्बगृह्यसूत्रम् Sec. Edition-1987 O.R.I Mysore
5. बोधायनागृह्यसूत्रम् O.Ṙ.I Mysore-1983
6. सत्याषाढगृह्यसूत्रम् गृह्यसूत्रभाग: vol-8, आनन्दाश्रम: पूना-1929
7. एकाग्निकाण्ड: (हरदत्तव्याख्यासमेत:) O.R.I Mysore-1902
8. तैत्तिरीयसंहिता सायणभाष्यसहिता, vol-4, वैदिक-संशोधना-मण्डल पूना-1981
9. आश्वलायनस्मृतिरत्नम् Editor- K.Venkatesha bhatta-1924
10. मनुस्मृत्ति: कुल्लकभट्टव्याख्यासहिता First Edition-1983 Reprint-2000 Motilal, Banarasidas Delhi
11. संस्काररत्नमाला गोपीनाथ दीक्षितविरचिता आनन्दाश्रम, पुना-19
12. वीरमित्रोदयम् चौखम्बा संस्कृत सिरिज् आफीस् वाराणासि-1983
13. धर्मकोश: लक्ष्मणशास्त्री जोशि, प्राज्ञ पाठशाला मण्डल Poonaa-1959
14. आपस्तम्बीयापरप्रयोग: सं.भारतुल शेषावधानुलु प्रकाशका:-गोतमी सेवा समिति 13, M.I.G.H. भोलक् पूर्, सिकिन्द्राबाद्-500080

# विवाहसंस्कारः जीवने तस्योपादेयता च

डॉ. सुधांशुभूषणपण्डा

गौतमधर्मसूत्रस्य प्रथमप्रश्नस्य अष्टमाध्यायस्य द्वितीयसूत्रे "चतुर्विधस्य मनुष्यजातस्य अन्तःसंज्ञानां चलनपतनसर्पणानामायत्तं जीवनम्" इत्युक्तमस्ति। इतः प्राक् प्रथमसूत्रे अस्मिन्नेव अध्याये उच्यते "द्वौ लोके धृतव्रतौ राजाब्राह्मणश्च बहुश्रुत" इति। तत्र राष्ट्रपदेन लोको बोध्यत इति हरदतः[1]। अत्र धृतव्रतौ धारयतारौ द्वौ, राजाबहुश्रुतश्च ब्राह्मणः भवतः। तत्रैव ब्राह्मणेन व्रतं निर्दिश्यते राजा च परिरक्षण करोति। ताभ्यामेव राजा-ब्राह्मणाभ्यां च मनुष्यजातस्य अन्तःसंज्ञानां चलनपतनसर्पणादीनाम् आयत्तं यद् जीवनं भवति, तदग्रेसार्यते। सूत्रस्यास्य व्याख्यायां कथयति मस्करिः[2] अन्तःसंज्ञा नाम अनुलोमप्रतिलोमः, वृक्षादयः स्थावराः, चलनाश्च चलच्छक्तिसम्पन्नाः पतनाश्च पक्षिण इति। मनुष्येण सह एतेषामेव समेषां मिथः सम्बन्धो विद्यते। तेनैव सम्बन्धेन सम्बन्धितानां सर्वेषाम् अग्रेसारणमेव जीवनम्। तदेव उच्यते भागवते–

**हस्तानि सहस्तानां अपदानि चतुष्पदाम्।**
**फाल्गुनि तत्र महतां जीवो जीवनस्य जीवनम्।।** इति।[3]

आङ्ग्लभाषायां यथोच्यते 'Motion os life and stagnation is death'। तत्र आङ्ग्लभाषायां Life इति यदुच्यते, तत्र चतुर्षु वर्णेषु चत्वारोऽर्थाः निहिताः सन्तीति उच्यते। ते च अर्थाः यथा 'L for liquidity in system, I for implimentation of rituals, F for fullfillment of desires, E for embodienment of culture'.

तत्र जीव्यते अनेन इति जीवनम्। जीव् करणे 'ल्यूट्' प्रत्ययेन जीवनमिति पदं निष्पद्यते। जीवनं नाम वृत्तिरिति शब्दकल्पद्रुमे[4]। जीविकेति श्रीधरस्वामी। अतः जीवनस्य रक्षायै उन्नतयर्थं लक्ष्यं च प्राप्तये यद्यद् अपेक्षते तत्तस्यैव महत्त्वम्। जीविकेति महत्त्वं जीवनस्य इति वक्तुं शक्यते। खाद्य-वस्त्रं-वासगृहादीनि मौलिकानि अन्यानि च वस्तूनि जीवनस्य कृते यथा अपेक्षन्ते, तथैव धर्मार्थकाममोक्षरूपकस्य चतुर्वर्गस्य फलप्राप्त्यर्थं संस्कारस्य अस्त्येव महती आवश्यकता इति विपश्चितां सम्मतमत्र। संस्कारस्य बहवः अर्थाः शास्त्रेषु दरीदृश्यन्ते। तत्र श्रुति स्मृति न्याय-वेदान्त-मीमांसाप्रभृतिषु

---

1. गौ. ध. सू. (मिता.) 1/8/1
2. गौ. ध. सू. (मिता. - सूक्ष्मा-मस्करिभाष्योपेतानि) पृ. 202
3. श्रीम. भा. पु. 1/13/44
4. श.क.द्रु.पृ. 539

विभिन्नाः अर्थाः संस्कारस्य प्रतिपादिताः दृश्यन्ते। तत्र तावत् वीरमित्रोदये संस्कारप्रकाशे संस्कारलक्षणम् एवमुक्तं यत् "आत्मशरीरान्यतरनिष्ठो[1] विहितक्रियाजन्योऽतिशयविशेषः संस्कारः।" संस्काराणामावश्यकता-विषये मनूक्तं वचनं सर्वानतिरिच्यते तद्यथा-

**गार्भैर्होमैर्जातकर्मचौड़मौञ्जीनिबन्धनैः[2]।**
**बैजिकं गार्भिकं चैनो द्विजानामपमृज्यते॥" इति।**

अपि च 'संस्कारैः ब्राह्मीय। क्रियते तनुः' इत्युक्त्वा संस्काराणाम् उपयोगितां दर्शयति मनुः यथा-

**"स्वाध्यायेन[3] व्रतैर्होमैस्त्रैविद्येनेज्यया सुतैः।**
**महायज्ञैश्च यज्ञैश्च ब्राह्मीयं क्रियते तनुः॥" इति।**

सन्ति बहवः संस्काराः। संस्काराणां भेदाश्च विविधाः एव प्रकल्पिताः वर्तन्ते।

गौतमेन[4] चत्वारिंशत्संस्काराः अष्टौ चात्मगुणाः, बौधायनेन[5] चत्वारः, आपस्तम्बेन[6] सप्तसंस्काराः प्रकल्पिताः सन्ति। सुमन्तुना[7] द्विजानां गर्भादारभ्य यज्ञदानान्तं संस्काराः प्रतिपादिताः। हारीतश्च[8] द्विविधं संस्कारं कथयति, ब्राह्मो दैवश्च।

अङ्गिरसा[9] पञ्चविंशतिसंस्काराः प्रोक्ताः। स्मृतिष्वपि[10] भगवता मनुना गर्भादारभ्य श्मशानं यावत् त्रयोदशसंस्काराः प्रतिपादिताः। याज्ञवल्क्यस्मृतौ[11] द्वादशसंस्काराः, व्यासस्मृतौ[12] षोड़शसंस्काराः विष्णुस्मृतौ[13] पञ्चदशसंस्काराश्च विख्यापिताः। निबन्धकारेषु[14] मित्रमिश्रेण एकचत्वारिंशत्संस्काराः

---

1. वी.मि.सं.प्र.पृ. 132
2. मनु.2/27
3. मनु. 2/28
4. गौ.ध.सु. 1/8/14-26
5. सं.प्र.पृ.37
6. सं.प्र.पृ. 37-38
7. सुमन्तुः, सं.प्र.पृ. 134
8. हारीतः, सं.प्र.पृ.135
9. अङ्गिरा, सं.प्र.पृ.135
10. मनु. 2/16-19, 3/1-4
11. याज्ञवल्क्यस्मृतेः आचाराध्याये
12. सं.प्र.पृ. 137
13. सं.प्र.पृ. 40
14. सं.प्र.पृ. 40-41

प्रपञ्चिता:। संस्कारप्रदीपे[1] एकविंशति:, निर्णयसिन्धौ चतुर्विंशति:, स्मृतिचन्द्रिकायां[2] षोडश, भगवन्त-भास्करे[3] ऊनविंशति:, पुरोहितकर्मकाण्डे[4] च त्रयोदशसंस्कारा: वर्णिता: सन्ति। संख्याविषये धर्मसूत्रगृह्य-सूत्रस्मृतिनिबन्धकारेषु तारतम्ये सति सर्वैरपि विवाहसंस्कार स्वीकृत:। सर्ववादिभिर्निर्णीतेषु संस्कारेषु विवाह: मुख्यसंस्कारत्वेन स्वीकृत:। तत्र विवाहशब्द: वि-उपसर्गात् 'वह'-धातो: घञि प्रत्यये कृते निष्पद्यते। पुरूषाणां कृते संस्कारोऽयम् उद्वाह: स्त्रीणां कृते विवाह इति चोच्यते। विवाहस्यानेके अर्था अपि कोषेषु दृश्यन्ते।

उपयम:, परिणय:, उद्वाह:, उपयाम:, पाणिपीड़नम् इत्यमरकोषे। दारकर्म, करग्रह: इति शब्दरत्नावल्याम्। पाणिग्रहणं, निवेश:, पाणिकरणमिति जटाधर:। संस्कारस्यास्य सम्बन्ध: वैदिककर्मकाण्ड-विधानेन सह विद्यते। ऋगथर्ववेदयोरस्यार्थ:[5] स्पष्टं निहितो वर्तते। तैत्तिरीयब्राह्मणे[6] "अयज्ञियो वा एष योऽपत्लिक: अथो अर्धो वा एष आत्मन: यत् पत्नी" इत्युक्तमस्ति। तैत्तिरीयसंहितायां त्रिभ्य ऋणेभ्य: मुक्त्यर्थं विवाहोऽधिकाधिकमहत्त्वपूर्ण: पवित्रश्चेति वर्ण्यते। उक्तञ्च-

**जायमानो[7] ह वै ब्राह्मणस्त्रिभि: ऋणै: ऋणवाञ्जायते।**
**ब्रह्मचर्येण ऋषिभ्यो, यज्ञेन देवेभ्य: प्रजया पितृभ्य:॥**

भगवता मनुनाऽपि आश्रमधर्मपालयन् कृतदारो गृहे वसेदिति उच्यते। तद्यथा-

**चतुर्थमायुषो[8] भागमुषित्वाऽऽद्यं गुरौ द्विज:।**
**द्वितीयमायुषो भाग: कृतदारो गृहे वसेत्॥**
**वनेषु[9] च विहृत्येवं तृतीयं भागमायुष:।**
**चतुर्थमायुषो भागं त्यक्त्वा सङ्गान् परिव्रजेत्।**

आश्रमधर्मपालनेन पुरुष: ब्रह्मलोकमवाप्नोतीति हारीतस्याशय:[10]। सर्वेष्वेतेषु आश्रमेषु गृहस्थाश्रमस्य महत्त्वं प्रतिपाद्यते ऋषिभि:। आदावेव भगवता मनुना-

---

1. सं.प्र.पृ. 41
2. सं.प्र.पृ. 41-42
3. सं.प्र.पृ. 42
4. तत्रैव
5. ऋग्वेद: 10/85 , अथर्व. 14/1/2
6. तै. ब्रा. 2/2-3 , 2/9/4-7
7. तैं. सं. 6/3/10/5
8. मनु. 4/1
9. मनु. 6/33
10. म. पु. 64

**ब्रह्मचारी[1] गृहस्थश्च वानप्रस्थो यतिस्तथा।**
**एते गृहस्थप्रभवाश्चत्वार: पृथगाश्रमा:।।**

**यथा[2] वायुं समाश्रित्य वर्तन्ते सर्वजन्तव:।**
**तथा गृहस्थमाश्रित्य वर्तन्ते सर्व आश्रमा:।।**

इति उक्त्वा गृहस्थाश्रमस्य महत्त्वं प्रकट्यते। अपरार्कोऽपि याज्ञवल्क्यस्मृतिभाष्ये "पत्नी[3] धर्मार्थकामानां कारणं प्रवरं स्मृतम्" इति उक्त्वा गृहस्थाश्रमस्य तज्जनकस्य विवाहसंस्कारस्य च महत्त्वं प्रतिपादयति। धर्मसूत्रकार:[4] गौतमोऽपि ऐकाश्रम्यं त्वाचार्या: प्रत्यक्षविधानात् गार्हस्थ्यस्य इत्युक्त्वा गृहस्थाश्रमस्य महत्त्वं प्रकटयति। तत्र गृहे (तिष्ठति) भव इति रूपेण गृहस्थशब्दस्योत्पत्तित्वात् पत्नीसंयोगेन एव गृहस्थो भवति पुरुष:। "न[5] गृहं गृहमित्याहु: गृहिणी गृहमुच्यते" इति वचनादपि पत्नीग्रहणात् तज्जनकात् विवाहसंस्कारात् गृहस्थो भवति कश्चित्। "अथातो[6] गृह्यस्थालिपाकानां कर्म" इत्यत्र पारस्कराचार्येण खादिरगृह्यसूत्रस्य "यस्मिन्नग्नौ पाणिं गृह्णीयात् स गृह्य" इत्यस्य वचनस्य निर्देश: कृत:। वस्तुत: गृह्यो वैवाहोऽग्नि:। कुल्लूकेनापि[7] कृतदारपरिग्रहो गृहस्थ:, गृहशब्दस्य दारवचनत्वादित्युच्यते। अत: धर्मपालनाय, कामप्राप्तये, वंशरक्षायै सामाजिकोत्तरदायित्वसम्पन्नाय च विवाहस्यास्त्येव महती आवश्यकता। आश्रमधर्मपालनेन व्यक्ति: ब्रह्मलोकं प्राप्नोति। उक्तञ्च हारीतेन यत्–

**अनेन[8] विधिना यो हि आश्रमानुपसेवते।**
**स सर्वलोकान्निर्जित्य ब्रह्मलोकाय कल्पते।।**

दक्षोऽपि वर्णानुसारं विवाहस्य निर्देशं करोति।

**त्रयाणामानुलोम्यं[9] स्यात् प्रातिलोम्यं न विद्यते।**
**प्रातिलोम्येन यो याति स च स्यात् पापकृन्नर:।।** इति।

अपरार्कोक्तं वचनं विवाहस्य महत्त्वं प्रतिपादयितुं यथेष्टं भवति। तद्यथा–

**पत्नी[10] धर्मार्थकामानां कारणं प्रवरं स्मृतम्।**
**अपत्नीको नरो भूप: कर्मयोग्यो न जायते।।**
**ब्राह्मण: क्षत्रियो वाऽपि वैश्य: शूद्रोऽपि वा नर.।।** इति।

---

1. मनु. 6/87
2. मनु. 3/77
3. अप. या. स्मृ. 1/81
4. गौतम: 1/3/35
5. श.क.द्रु.भा.2 पृ. 35, गौ.ध.सू. (सूक्ष्मा) 1/4/1
6. पा. गृ. सू. 1/1/1
7. मनु. मन्वर्थ. 3/2
8. भ. भा. (सं.म.) पृ. 64
9. दक्षस्मृति: 1/12
10. अप. या. स्मृ. 1/151, सं.म.पु. 34, द. स्मृ. 1/12

न केवलमद्यतने कालेऽपि च प्राचीनेऽपि काले विवाहस्यमहत्त्वमासीत्। मनुष्यस्य वृत्तिगतविकासनिमित्तं विवाहस्यावश्यकताऽस्त्येव। सामाजिकस्थितेः सुरक्षा समुचितेन विवाहेन भवति।

नैष्ठिकाः उपकुर्वाणाश्च ब्रह्मचारिणो भवन्ति। उपकुर्वाणस्यैव ब्रह्मचारिणः स्नातके अधिकारः। स च स्नातकः वोढुं समर्थः। तदुच्यते–

**अविप्लुतब्रह्मचर्यो[1] लक्षण्यां स्त्रियमुद्वहेत्।**
**अनन्यपूर्विकां कान्तामसपिण्डां यवीयसीम्॥**

अर्थात् विवाहे कृतस्नानस्यैव अधिकार इति विज्ञायते। अत्र शूद्रादीनाम् अन्तःसंज्ञानामपि विवाहेऽधिकारो वर्तते इति अमन्त्रकाः क्रियास्तेषाम्। तत्राष्टौ विवाहाः प्रकीर्तिताः सन्ति। वैखानसगृह्यसूत्रमपि[2] वचनमिदं समर्थयति। तद्यथा–अथातः पाणिग्रहणम्। अष्टौ विवाहाः भवन्ति, ब्राह्मः, दैवः, प्राजापत्यः, आर्षः, आसुरः, गान्धर्वः, राक्षसः, पैशाचश्चेति।

हारीतः[3] विंवाहस्याष्टविधत्वं स्वीकरोति। अथाष्टौ विवाहाः भवन्ति। ब्राह्मः, दैवः, गान्धर्वः, आसुरः, राक्षसः, पैशाचः, मानुषः, क्षात्रश्चेति।

वशिष्ठेन[4] षड्विवाहाः स्वीकृताः। तेन च ब्राह्म-दैव-आर्ष-गान्धर्व-क्षात्र-मानुषाश्चेति। ब्राह्मदैवाद्यष्टविवाहेषु वर्णानुसारेण धर्म्याणामधर्म्याणां च विवाहानां वर्णना भगवता मनुना कृता। तद्यथा–

**षडानुपूर्व्या[5] विप्रस्य क्षत्रस्य चतुरोऽवरान्।**
**विट्शूद्रयोस्तु तानेव विद्याद्धर्म्यानराक्षसान्॥** इति।

अर्थात् ब्राह्मणस्य ब्राह्मादिक्रमेण षट्, क्षत्रियस्यासुरादयश्चत्वारः, विट्शूद्रयोस्तु आसुर-गान्धर्व-पैशाचविवाहाः प्रशस्ताः सन्ति। तत्रापि–

**चतुरो[6] ब्राह्मणस्याद्यान्प्रशस्तान्कवयो विदुः।**
**राक्षसं क्षत्रियस्यैकमासुरं वैश्यशूद्रयोः॥** इति

उक्त्वा ब्राह्मणस्य कृते ब्राह्मदैवार्षप्राजापत्याख्याश्चत्वारो विवाहाः, एक एव राक्षसविवाहः क्षत्रियस्य कृते, वैश्यशूद्रयोः कृते पैशाच एक एव विवाहश्च प्रशस्ताः भवन्तिः तत्रापि–

---

1. याज्ञ.स्मृ. 1/52
2. वै.गृ.सू. 3/1
3. गृ.र.पृ. 49, सं.प्र.पृ. 846
4. गृ.र.(सं.प्र) पृ. 846, वसि. 1/28-29, गृ.क.पृ.31
5. मनु. 3/33
6. मनु. 3/24

**पञ्चानां[1] तु त्रयो धर्म्या द्वावधर्म्यौ स्मृताविह।**
**पैशाचश्चासुरश्चैव न कर्तव्यौ कदाचन॥**

अपि च–

**पुथक्पृथग्वा[2] मिश्रौ वा विवाहौ पूर्वचोदितौ।**
**गान्धर्वो राक्षसश्चैव धर्म्यौ क्षत्रस्य तौ स्मृतौ॥** इति।

अतस्तत्र विवाहेषु धर्म्याणां पालनमधर्म्याणाञ्च त्याग: कर्त्तव्य:। विष्णुरपि "अथाष्टौ[3] विवाहा: भवन्ति। ब्राह्म:, दैव:, आर्ष:, प्राजापत्य:, गान्धर्व:, आसुर:, राक्षस:र, पैशाचश्चेति। शङ्ख[4]-मनु-नारद-यम-पराशराश्चाष्टौ विवाहान् स्वीकुर्वन्ति। विवाहस्य सामाजिकी उपयोगिताविषये अस्माभिर्वक्तुं शक्यते यद्विवाहस्य यानि उद्देश्यानि पूर्वोक्तानि तानि वै सामाजिकोपयोगितात्वेन परिगण्यन्ते। तेषामाकलनं यथामति: क्रमश: क्रियते–

**धर्माय क्रियते विवाह:-** धर्म: पुरुषार्थेषु आद्य: पुरूषार्थ:। विवाहसंस्कारानन्तरं पत्नीद्वारा पत्नीसाहाय्येन वा धर्मसाधनं भवति। अथ किं भगवान् रामचन्द्रोऽपि यज्ञसाधनाय स्वर्णमय्या: सीताया: निर्माणं चकार इति रामायणाद्विज्ञायते। पञ्चमहायज्ञानां साधनं देवपूजाप्रभृतीनामनुष्ठानं गृहस्थाश्रमे पत्नीद्वारा संसाध्यते इति वैशिष्ट्यमस्य विवाहसंस्कारस्य। न केवलं धर्मस्यापि च धर्मार्थकामानामपि त्रयाणां पुरुषार्थानामवाप्ति: विवाहेन भवतीति मार्कण्डेयपुराणवचनात् विज्ञायते। तद्यथा–

---

1. मनु. 3/25
2. मनु. 3/26
3. वि.स्मृ. 24/17/18
4. ब्राह्मो दैवस्तथैवार्ष: प्राजापत्यस्तथासुर:।
   गान्धर्वो राक्षसश्चैव पैशाचश्चाष्टमोऽधम:॥ (श.स्मृ.4/2)
   चतुर्णामपि वर्णानां प्रेत्य चेह हिताहितम्।
   अष्टाविमान् समासेन स्त्रीविवाहान्निबोधत:॥
   ब्राह्मो दैवस्तथैवार्ष: प्राजापत्यस्तथासुर:।
   गान्धर्वो राक्षसश्चैव पैशाचश्चाष्टमोऽधम:॥ (मनु. 3/10-11)
   अष्टौ विवाहा वर्णानां संस्कारार्थं प्रकीर्तिता:।
   ब्राह्मस्तु प्रथमं तेषां प्राजापत्यस्तथैव च॥
   आर्षश्चैवाथ दैवश्च गान्धर्वश्चासुरस्तथा।
   राक्षसोऽनन्तरस्तस्मात् पैशाचश्चाष्टमोऽधम:॥
   प्राजापत्य-ब्राह्म-दैवविवाहा आर्षसंयुता:।
   उक्तकाले तु कर्तव्याश्चत्वार: फलदायका:॥
   गान्धर्वासुरपैशाचराक्षसाख्यास्तु सर्वदा। (ना.स्मृ. 15/38-39) (ज्यो.नि. 27/141-143)
   ब्राह्मो दैवस्तथैवार्ष: प्राजापत्यस्तथाऽऽसुर:।
   गान्धर्वो राक्षसश्चैव पैशाचश्चाष्टमोऽधम:॥ (गृ.क.पृ. 72/गृ.सू.पृ.60-61)

यदा[1] भार्या च भर्ता च परस्परवशानुगौ।
तदा धर्मार्थकामानां त्रयाणामपि सङ्गतम्॥

कथं भार्यामृते धर्ममर्थं वा पुरुष प्रभो।
प्राप्नोति काममथवा तस्याः त्रितयमाहितम्।
तथैव भर्तारमृते वा भार्या धर्मादिसाधने।
न समर्था त्रिवर्गोऽयं दाम्पत्यं समुपाश्रिताः॥ इति।

अन्यत्राप्युच्यते यत्–

आम्नाये स्मृतितन्त्रे च लोकाचारे च सूरिभिः।
शरीरार्द्धं स्मृता भार्या पुण्यपुण्यफलैः समाः॥ इति।

कालिदासोऽपि कुमारसम्भवाख्ये महाकाव्ये–"क्रियाणा[2] खलु धर्म्याणां सत्पत्न्यो मूलकारणम्" इत्युक्त्वा धर्माय पत्न्याः महत्त्वं प्रतिपादयति।

अस्माकं समाजे विवाहोऽनुष्ठानं भवति। विवाहानन्तरमाजीवनं पारस्परिकजवश्वासेन प्रेम्णा सुखेन दुःखेन च सांसारिकं सामाजिकञ्चोत्तरदायित्त्वं निर्वाहयतः दम्पतिः। एकेन विदुषा उक्तं यत्–"Rituals invest the institution of marriage with sanctity and authenticity. It is here that Dharmasasta steps into provide firm basis for the life-long companionship of teh spouses. The caremony of marriage comprising an intricate set of rituals thus becomes very significant in our tradition"

विषयेऽस्मिन् कविकुलगुरुणा कालिदासेन उक्तं यत्–

विवाहयज्ञे[3] विततेऽत्र यूयमध्वर्यवः पूर्ववृता मयेति।

वस्तुतः सुखदुःखेषु भार्या एव पुरुषस्य सहायिका भवति। पारस्परिकभावविनिमयेन सांसारिकः क्लेशः हीयतें महाभारते विषयेऽस्मिन् सम्यगुक्तमस्ति यत्–

भार्या[4] हि परमो नाथः पुरुषस्येह पठ्यते।
असहायस्य लोकेऽस्मिन् लोकयात्रासहायिनी॥

तथा रोगाभिभूतस्य नित्यं कृच्छ्रार्त्तस्य च।
नास्ति भार्यासमो बन्धुर्नास्ति भार्यासमा गतिः॥

---

1. मार्क.पु. 21/69-72
2. कुमार. 6/13
3. कु.स. 7/47
4. महा. 12/142-6-10

**नास्ति भार्यासमो लोके सहायो धर्मसाधनः।**

वंशस्य धाराया: रक्षणाय विवाहस्यावश्यकताऽस्त्येव। तेन पितृऋणात् मुक्तो भवति पुरुष:। सन्तानस्य पालनं परिवारमाध्यमेनैव भवितुमर्हति। न तु क्रेच् (creche) द्वारा। स्वस्थ-शिक्षित-सुनिश्चितभविष्यद्द्वारा सुनागरिकस्योत्पत्तिर्भवति। सुनागरिक एव स्वस्थसमाजस्य कारणं भवति।

विवाहो न केवलं द्वयोरात्मनो मेलनं करोति अपि च द्वयो: परिवारयो: द्वयोश्च समाजयो: संस्कृत्योर्मेलनं करोति। आर्थिक-सामाजिक-राजनीतिक-स्थितिसुदृढाय विवाह: महत्त्वपूर्णं स्थानं धत्ते। प्राचीनकाले राजपरिवारयो: विवाहद्वारा विशालसाम्राज्यस्य स्थापनेन सह आर्थिकाभिवृद्धि: सांस्कृतिकमिलनमपि अभवत्।

विभिन्नकारणवशात् स्त्रीणां रक्षायै धर्मपालनाय च धर्मशास्त्रे बहुविधा: व्यवस्था: प्रकल्पिता: सन्ति। उक्तञ्च मनुना–

**पिता[1] रक्षति कौमारे भर्त्ता रक्षति यौवने।**
**रक्षन्ति स्थविरे पुत्रा न स्त्री स्वातन्त्र्यमर्हति।।** इति।

तर्हि विवाहानन्तरं विवाहिताया: रक्षां करोति पति:। संस्कार-नैतिकताप्रभृतिभि: परिप्लुतौ द्वौ परवर्तिसन्तानानां कृते मार्गदर्शकौ भवत:। स्वस्थशृङ्खलितयौनजीवनाय विवाहस्यास्त्येव महती आवश्यकता। एकपत्नीव्रतेन च तत्सम्भवति। सम्प्रति सर्वकारद्वारा समलैङ्गिकविवाहस्य विवाहव्यतिरेकेण स्त्री-पुरुषयोस्सहावस्थानस्य च यदनुमोदनं क्रियते, तत्समाजस्य परिवारस्य विवाहोद्देश्यपालनस्य च प्रत्यवायाय भवति। विषयेऽस्मिन् चिन्तानायकैर्विद्वद्भिश्च चिन्ता कार्या। विवाहेन सामाजिकोत्थानमपि भवति। व्याधिशून्यजीवनयापनमानन्दमयं भवति। पारस्कराचार्येणापि "सरस्वतीप्रेदमव[2] सुभगे वाजिनीवती" इत्युक्त्वा आनन्दपूर्णजीवनं परिकल्पितम्। वस्तुत: आनन्दपूर्णजीवनं सुखस्य कारणं भवति। उच्यते भगवता मनुना यत्–

**सन्तुष्टो[3] भार्यया भर्ता भर्त्रा भार्या तथैव च।**
**यस्मिन्नेव कुले नित्यं कल्याणं तत्र वै ध्रुवम्।।**

अपि च–

**यदा[4] भर्ता च भार्या च परस्परवशनुगौ।**
**तदा धर्मार्थकामानां त्रयाणामपि सङ्गतम्।।**

इति शम्।

1. मनु. 9/3
2. पा. गृ. सू. 1/7/1
3. मनु. 3/60
4. मनु. प्र. 3/2

# दाराशिकोहविरचितस्समुद्रसङ्गमस्तस्य प्रासङ्गिकत्वञ्च

श्रीनारायणदत्तमिश्रः

''धृञ् धारणे''[1] इत्यस्माद्धातोर्मनिन्प्रत्यये सति धर्मशब्दोऽयन्निष्पद्यते। धारणञ्चेह स्वभावस्योद्बोधकम्।[2] यथोक्तम्-'धृतिः क्षमा दमोऽस्तेयञ्शौचमिन्द्रियनिग्रहः। धीर्विद्या सत्यमक्रोधो दशकन्धर्मलक्षणम्।।''[3] वस्तुतस्सत्याहिंसादीनान्धर्मत्वेन व्यवहारो परिकल्प्यते। एतदनुसारम्मानवजीवनार्थं यस्स्वभावविशेषः परमावश्यकः प्रख्यापितस्स एव धर्म इति वक्तुञ्शक्यते। धर्मतत्त्वमिदञ्जगदपेक्षया सर्वदैव सन्तिष्ठत इति तथ्यम्। यद्यपि ''वेदप्रणिहितो धर्मो ह्यधर्मस्तद्विपर्ययः''[4], इति वचनानुसारं वेदसम्मतमेव सर्वं धर्मत्वेन स्वीकर्तुञ्शक्यम्, तथापि भारतवर्षे वैदिकधर्मातिरिक्तानां विविधधर्मानुयायिनाम्बहुश आगमनन्तेषामत्रैव वासश्च तांस्तान् धर्मान् तदीयविचारांश्च सम्मेल्य धर्मस्य स्वरूपम् इतोऽप्यधिकं विशदीकर्तुम्महद्योगम्प्रायच्छताम्। एवन्धर्मस्वरूपङ्कालानुसारम्परिष्कृतञ्जातम्।

''लोकस्यास्य सर्वम्मानवाचरणम् आचरणाधृता विविधविश्वासविषयाः, तेषामाचरणानां विश्वासविषयाणाञ्चेदानीं यावत् प्रचलन्ती निरवच्छिन्ना परम्परा, धार्मिक्यो मान्यता नीतिगता विचाराः किं वा समग्रञ्जीवनदर्शनञ्जीवनयापनप्रक्रिया वा सर्वं संस्कृतित्वेन व्यवह्रियते।''[5] अर्थाज्जीवनगता समग्रा परिष्कृतिरेव संस्कृतिरित्युच्यते। संस्कृतिसन्दर्भे हि विविधधर्मसम्बद्धस्यैतादृशपरिष्कृति-रूपसंस्कृतिस्वरूपस्याद्भुतन्निदर्शनम्भारतवर्षीयायाः संस्कृतेरद्वितीयत्वम्परिचाययति। एतादृश्यां विविधधर्म-संयुतायाम्भारतीयसंस्कृतौ वैदिकधर्मस्याभिधानपरिवर्तनमप्युररीजातम्। पुराऽरबाख्यदेशवासिभि-स्सम्यगुच्चारणवैकल्यात् सिन्धुतटवासिनो हिन्दवः (सिन्धवः) तथा च तेषान्धर्मो हिन्दूधर्म इत्युदीरितः। ततो कालापेक्षं हिन्दू इत्यस्य शब्दस्य हिन्दूधर्मपदस्य च प्रयोगो प्रसिद्धिङ्गतः। परमत्र हिन्दूधर्मपदस्यास्य स्थाने वैदिकधर्मस्यैव प्रयोगो विधास्यते। वस्तुतो विश्वप्रचलितानां सर्वधर्माणान्तद्गतदर्शनतथ्यानामालोडनेन

---

1. भट्टोजिदीक्षितः, वैयाकरणसिद्धान्तकौमुदी, सं.-भार्गवशास्त्रिजोशी, निर्णयसागर प्रेस, बॉम्बे, अष्टमसंस्करणम्-1942 पृष्ठ संख्या-381
2. धारणाद् धर्ममित्याहुः...(कर्णपर्व 69/58)
   संस्कृतसूक्तिसमुच्चयः (चतुर्दशो भागः), सं. श्रीकृष्णसेमवालः, दिल्ली-संस्कृत-अकादमी, दिल्ली, प्रथमं संस्करणम्-2003, पृ. सं.-223
3. (म.स्मृ. 6/92) मनुस्मृतिः (प्रथमो भागः), परिमल पब्लिकेशन्स, दिल्ली-2004, पृ. सं.-531
4. (म.स्म. 4/138) मनुस्मृतिः (प्रथमो भागः), पृ. सं.-378
5. Culture is that complex work which includes knowledge, belief, art, moral, law, custom and Any other capabilities acquired by man as a member of society.-E.B.Taylor
   किरणटण्डन, भारतीय संस्कृति, ईस्टर्न बुक लिंकर्स, दिल्ली, द्वितीय संस्करण-2006, पृ. सं.-3

प्राणिमात्रकल्याणमङ्गीकृत्य तेषां समेषां समन्वयनमेकत्वं वा साधयितुंशक्यते। प्रसङ्गेऽस्मिन्नाधुनिकेषु सर्वधर्मसमन्वयप्रतिपादकेषु विवेकानन्द-गन्धिरवीन्द्रनाथ-राधाकृष्णनादीनाम्बहूनाम्भारतीयानाम् अन्येषां वैदेशिकानान्दार्शनिकानाञ्च नामान्युदाहर्तुं शक्यते। एतादृशेष्वेव समन्वयननायकेषु सर्वधर्मैक्या-भीप्सूनान्धर्मसम्प्रदायादिप्रवर्तकानाम्महापुरुषाणामपि कार्यम्बहूल्लेखार्हम्भवति। प्रसङ्गेऽस्मिंस्तत्त-कालिकानाञ्शासकानामपि नामानि विशेषत उल्लेखयितुञ्शक्यते। येषु चन्द्रगुप्तमौर्य-अशोक-हर्षवर्धन-चङ्गेजखां-बाबर-शेरशांह-अहमदलोदी-अकबरादीनाञ्शासनपद्धत्या। तेषाञ्जीवनस्य विविधप्रसङ्गैश्च स्वधर्मादन्यधर्मम्प्रत्यैक्यस्य तदीया भावना: परिशीलयितुंशक्यते।[6] यद्यप्येतादृशेषु शासकेषु स्थितेष्वपि तादृक् सामाजिकस्समवायस्सन्तिष्ठत एव येन सर्वधर्मसद्भाव: खण्ड्यते। ईदृशी स्थितिर्हीस्लामधार्मिकाणाञ्शासकानाङ्कालेऽपि समापतत्। यत्रेस्लामधर्मानुयायिनाङ्कतिचिद्वर्गो वैदिकेस्लामधर्मैक्यविरोधी सन् स्वधर्मस्यैवान्यधर्मापेक्षया वैशिष्ट्यसाधने प्रयासरत आसीत्।[7] एवं सत्यपि तेषाञ्शासकानान्धर्मसमन्वयनाभीप्सूनाञ्च प्रयासो न न्यूनो वक्तुंशक्यते। ईदृश्शासकानां समये तत: पश्चाच्च भारतवर्षे वैदिकेस्लामधर्मानुयायिषु परमेश्वरभक्तिभावनायुतस्साधुजनसमवायोऽपि सर्वधर्मैक्यम्प्रतिपादयितुम्प्रयासरत आसीत्। वैदिकधर्मानुयायिषु भक्तिमार्गिणाम् इस्लामधर्मानुयायिषु च सूफीमतसम्पोषकाणां सन्दर्भेऽस्मिन् महत्त्वपूर्णं स्थानमिति स्वीक्रियते। यथा वैदिकधर्मानुयायिनाम्भक्ति-मार्गिणाम्परमेश्वरसम्बद्धास्सिद्धान्तास्तद्वदेवेस्लामधर्मानुयायिनां सूफीमतसम्पोषकाणां विचारा आसन्। भक्तिमार्गस्य प्रसिद्धत्वान्नात्र तस्य परिचयस्तथाऽपेक्ष्यते यथा सूफीमतस्य। तद्यथा, इस्लामधर्मोऽयञ्चतुर्भेदयुत:। यत्र शियासुन्नीसम्प्रदाय-इस्माइल्स-इमामिया-सूफीतिमतानाम्परिगणनं विधीयते।[8] इस्लामधर्मस्य सूफीमतम् अल्लाह इत्यस्यैकत्वमेव परमं सत्यमित्यात्मसात्करोति। एवम्मतञ्चेदम् इस्लामधर्मोपरि वैदिकबौद्धधर्मयोस्सम्मिलितप्रभावप्रतिफलितमिति स्पष्टीभवति। अल्लाह इत्यस्यार्थाद् ईश्वरस्य चरणयोस्सर्वस्वार्पणेनाहमेवेश्वर इति धिया भवितव्यमिति मतमिदं स्वीकरोति।[9] अस्येस्लामधर्मस्य सम्प्रदायमतानुसारम् एक एवेश्वरो विद्यते तस्मिन् सागररूप ईश्वरे जलबिन्दुवद् विलीनत्वमेव तेषाम्परमन्ध्येयङ्कल्पते। एतादृशमेव सिद्धान्तमुररीकृत्य तस्येश्वरस्यैकत्वं वैदिकधर्मानुयायिभिर्भक्तिवादिभि: किं वाऽद्वैतवादिभि: प्रतिपाद्यते।[10] अनयोर्द्वयोर्मार्गिणो: परमेश्वरापेक्षम्परस्परं सममतम्बहुत्रानुशीलयितुञ्शक्यते। वैदिकधर्मानुयायिषु भक्तिसाम्प्रदायिका इस्लामधर्मानुयायिषु च सूफीमतावलम्बिनश्चैतादृशमनुशीलनं विधायानयोर्द्वयोर्धर्मयोस्स्थितं साम्यमुपदिष्टवन्त:।

---

6. रामफल सिंह, हिन्दू मुस्लिम सांस्कृतिक एकता, राजपाल प्रकाशन, दिल्ली, प्रथम संस्करण-1989, पृ. सं. -19,21,55
7. ..............., हिन्दू मुस्लिम सांस्कृतिक एकता, पृ. सं.-28
8. हरेन्द्र प्रसाद सिन्हा, धर्मदर्शन की रूप-रेखा (द्वितीय खण्ड), मोतीलाल बनारसीदास, दिल्ली, पुनर्मुद्रित संस्करण-2008, पृ. सं.-67-68
9. ..............., धर्मदर्शन की रूप-रेखा (द्वितीय भाग), पृ. सं.-68
10. हरिनारायणतिवारी, शब्दब्रह्मपरब्रह्मणोस्तादात्म्यसमीक्षणम्, सन्ध्या प्रकाशन, वाराणसी, 2004, पृ. सं.-117

अस्मिन् भक्तिसूफीमतसमवाय एव अकबरपौत्रस्य शाहजहांऽऽख्यस्य शासकस्य दाराशिकोहनाम्नो ज्येष्ठपुत्रस्य प्राधान्येन परिगणनं विधीयते। यस्य जन्म 1615 खीस्ताब्देऽथ मृत्युश्च 1659 ख्रीस्ताब्दे बभूव।[11] पञ्चचत्वारिंशद्वर्षेष्वनेन यादृग्ग्रन्थानां विलेखनमनुवादकार्यञ्च विहितं ययोरद्यावध्यपि स्वकीर्त्तिपताकया स आदरभाक् सन् सन्तिष्ठते। वस्तुत द्विधर्मगतसाम्यम्परीक्ष्यमाणे सति तयोर्धर्मयोस्तदीयतत्त्वविचारप्रतिपादकयोर्द्वयोर्भाषयोश्च सम्यङ्ज्ञानमपेक्षते। निकषेऽस्मिन्ननेनापेक्ष्यमाणेन सामर्थ्येण दाराशिकोहो युक्तो दृश्यते। अन्योर्धर्मयोर्भाषयोश्च विद्वत्त्वमनेन सम्यग्तयाऽधिगतमासीत्। स्वधर्मस्य भाषायाश्च विद्वत्त्वन्तस्मिन् दाराशिकोहे तत्कालीनस्य समाजस्य वंशस्यानुगुणञ्च समभूदेव परन्तत्कालानुगुणं वैदिकेस्लामधर्मयोः परस्परम्प्रभावविषयत्वेनाथ पण्डितराजजगन्नाथ-चन्द्रभान-कवीन्द्राचार्य-सरस्वत्यानान्त्रयाणामेतेषां संस्कृतवाग्विदुषां सन्निधिविषयत्वेन च सममेव वैदिकधर्मसंस्कृतवाग्विज्ञत्वमपि तेनावाप्तमिति ज्ञायते।[12] अयम्फारसीसंस्कृतभाषयोस्तात्कालिकेन विद्वद्वरेण्येन स्वीकृत आसीद् येन कतिचनोपनिषदामन्यविदुषां साहाय्येनानुवादकार्यं सम्पादितम्। एवन्द्वयोर्धर्मयोः प्रतिपादितस्य परमसत्यविषयस्य मुहुर्मुहुरनुशीलने विश्लेषणे सत्यनेन सूफीमतावलम्बिना विद्वद्वरेण्येण दाराशिकोहेण मज्म-उल-बहरीन इति नाम्ना सर्वप्रथमम्फारसीभाषायाङ्कञ्चिद् ग्रन्थविशेषं विलिख्य स्वमत्यनुसारं वैदिकेस्लाम-धर्मगतसाम्यविचाराः प्रतिपादिताः। तदनु संस्कृतभाषायामस्याक्षरशोऽनुवादं विधाय तेन समुद्रसङ्गम इति ग्रन्थनाम चक्रे।[13] द्वयोर्वैदिकेस्लामधर्ममर्मज्ञयोर्मतसमुद्रयोस्साम्यमुल्लिख्य धर्मसङ्गमाभीप्सुना दाराशिकोहेण स्वयमेवास्योद्घोषो विहितः-"ज्ञानिनोर्द्वयोरपि मतसमुद्रयोरिह सङ्गम इति चास्य नाम समुद्रसङ्गम इति।"[14] तेन तथ्यमिदमपि विज्ञापितं यत् सद्गुरुश्रीबाबालालस्य सान्निध्यमवाप्य द्विधर्मगतमतैक्यञ्च विमृश्य कतिपयानाञ्ज्ञातव्यसिद्धान्तितवाक्यानां सङ्गमोल्लेखमत्या ग्रन्थोऽयम्प्रणीयत इति।[15] तात्कालिकसमाजानुगुणमेतादृग्ग्रन्थविरचनविरोधिणाम्मतम् अवज्ञाय परधर्मकुण्ठितमतीनाम्भेदवादिनाम्मतमभेद्यं यथा स्यादिति लक्ष्यावाप्तय एव समुद्रसङ्गमस्तेन विलिखितमासीत्। तथाऽप्येतस्य विरोधमाशङ्क्य ख्वाजेऽहराराख्यमहापुरुषवचनं सप्रमाणमुद्धृत्य च तेन परमेश्वरशरणमेव श्रेयस्करम्मतम्। ख्वाजेऽहरारवचनं हि चाणक्यनीतितुल्यम्।[16]

---

11. दाराशिकोहः, समुद्रसङ्गमः, सं.-बाबूलाल शुक्ल शास्त्री, भारतीय विद्या प्रकाशन, वाराणसी, प्रथम संस्करण-1995 पृष्ठसंख्या i-iii
12. मैनेजर पाण्डेय, "दाराशिकोह की संस्कृत सेवा", संस्कृतिः संस्कारश्च, सं.-शशिप्रभा, कुमार, विद्यानिधि प्रकाशन, दिल्ली, प्रथम संस्करण-2009, पृ. सं.-42
13. ..............., "दारा शिकोह की संस्कृत सेवा", संस्कृतं संस्कृतिः संस्कारश्च, पृ. सं.-42-43
14. ..............., समुद्रसङ्गमः, पृ.सं.-2
15. ............... समुद्रसङ्गमः, पृ. सं0-2
16. विषादप्यमृतङ्ग्राह्यम् अमेध्यादपि काञ्चनम्।
    नीचादप्युत्तमां विद्यां स्त्रीरत्नां दुष्कुलामपि।। (चाणक्यनीतिः 1/16)
    गुञ्जेश्वरचौधरी, चाणक्यनीतिदर्पणः चौखम्बा सुरभारती प्रकाशन, वाराणसी, द्वितीय संस्करण-1995, पृ. सं.0-9

**उत्साहभूः स च दयारणदातयोगात्,**
**त्रेधा किलात्र मतिगर्वधृतिप्रहर्षाः॥**[1]

प्रतापविनयादिभावैः विभावितो भूत्वा दयारणदानादि-अनुभावैः अनुभावितं भूत्वा तथा गर्वधृतिहर्षामर्षस्मृतिमतिवितर्कादिव्यभिचारिभिः भूत्वा सम्पादितम् उत्साहनामकस्य स्थायिभावस्य वीररसरूपेण आस्वादनं भवति। तात्पर्यमस्ति यत् यः सहृदयानां चिन्तनं विस्तारयन् आनन्दं ददाति सः वीररसः।

वीररसस्य स्थायिभावः 'उत्साहः'। उत्साहस्य उत्पत्तेः निमित्तान्यालम्बनानि वा अनेकानि सन्ति। उत्साहात्मिका चित्तवृत्तिः वीररसस्य प्रमुखं आलम्बनम्भवति यथा प्रतिद्वन्द्विना युद्धाय उद्वेलिते रतिः शत्रून् पराजेतुम् उत्पन्ना चित्तवृत्तिः, दरिद्रजनानाम् अवस्थां दृष्ट्वा स्वर्णादि- प्रदानाय प्रकटिता चित्तवृत्तिः धर्मक्रियासु रुचिना तपयज्ञादे आराधनाय आर्तसत्वानां दुःखापहरणाय च या उत्साहात्मिका चित्तवृत्तिः। अतः वीररसस्य भेदानामेषा चिन्तवृत्तिः आधारः भवति।

एतान् अनुभावान् अवलम्ब्य मुनिः भरतः ब्रह्मोक्तान् दानवीरधर्मवीर- युद्धवीरश्चेति त्रिभेदान् आख्यायाति।[2] आचार्येण धनञ्जयेन दानवीरः - दयावीरः - युद्धवीरश्चेति त्रिभेदाः मन्यते।[3] साहित्यदर्पणकारः विश्वनाथः भरतधनञ्जययोः मन्तव्यानां समचितान् चतुरो भेदान् स्वीकरोति, यथोक्तम् "स च वीरो दानवीरो - धर्मवीरो - युद्धवीरो - दयावीरश्चेति चतुर्विधः" पश्चाद्वर्ति-आचार्येण जगन्नाथेनापि चत्वारो भेदाः स्वीकियन्ते। अन्यत्र सत्यवीर-पाण्डित्यवीरप्रभृतयः भेदा अपि क्रियन्ते।

महाकविः श्रीहर्षः नलस्य दानवीरतायाः समग्रतया चित्रणं कृतवान्। मेघसदृशः नलाधिपतिः दरिद्रेभ्यः याचनादधिकं धनं दत्वा तोषयतिस्म।

**दारिद्र्यदारिद्रविणौघवर्षैरमोघमेघव्रतमर्थिसार्थे।**

**संतुष्टमिष्टानि तमिष्टदेवं नाथन्ति के नाम न लोकनाथम्॥**[4]

इत्थं अत्यधिकदानशीलः स इच्छितफलदायिनः कल्पवृक्षस्यापि यशः मलिनं करोतिस्म।

दानं प्रति नलस्य तत्परतायाः सङ्कल्पस्य च वर्णनं कवीना चमत्कारजन्यं विहितम्। यथा--

**विभज्य मेरुर्न यदर्थिसात्कृतो,**
**न सिन्धुरुत्सर्गजलव्ययैर्मरुः।**
**अमानि तत्तेन निजायशोयुगं,**
**द्विफालबद्धाश्चिकुराः शिरःस्थितम्॥**[5]

1. दशरूपके 4.72
2. दानवीरं धर्मवीरं ...... नाट्यशास्त्रम् 6.79
3. साहित्यदर्पणः 3.234
4. नैषधीयचरितम् 3.25
5. नैषधीयचारितम् 1.16

कुराणानुसारम्परमेश्वरस्य निःश्वसितं वायुरुच्यते तन्निःश्वसितनिरोध एव तेजो जातः तत्तेजश्शीतले सति जलरूपे पर्यवर्तते। इत्येवं सः प्रतिपादयति।[25] प्रसङ्गेऽस्मिन् ''तस्माद् वा एतस्मादात्मन आकाशस्सम्भूतः। आकाशाद् वायुः। वायोरग्निः। अग्नेरापः। अद्भ्‍ः पृथिवी।''[26] इत्यौपनिषदम-तन्तोलयितुंशक्यम्। समुद्रसङ्ग्रहकृत् स्वधर्ममतमभिलक्ष्य महाप्रलयकाले भूतानां व्युत्क्रमेण लीनतामप्युल्लेखयति, तद्धि ''एतेषाम्भूतानाम्महाप्रलये व्युत्क्रमेण लयः। तत्र प्रथमम्पृथिव्या जले लयः, ततो जलन्तेजसश्शुष्यत्तेजसि लीयते। ततो वायुनाऽभिहन्यमानन्तेजो वायौ लीयते। ततो वायुः, उन्सूरे-आजमपदाभिधेयेन सह चिदाकाशे लीयते।''[27]

इयं हि प्रक्रिया वैदिकमतानुयायिनामप्यभिप्रेतेति साम्यान्वितङ्कञ्चनापरन्तथ्यम्।[28] वैदिकमतानुयायिभिः पृथिव्यै देवीति कथनम्पञ्चमहाभूतेष्वस्या वैशिष्ट्यं स्पष्टीकरोति।[29] तत इस्लामधर्मसम्मतमपि पृथिव्यास्तादृशमेव मनाग् वैशिष्ट्यमिति प्रतिपादयितुन्दाराशिकोहस्सर्वेषाम्पृथि-व्याञ्जनिर्मृत्युश्च जायेते ततः पश्चाद् इत एव पुनस्सृष्टिर्विधीयते[30] इति कुराणवचनं विशदयति। पश्चाच्चाकाशपृथिवीविषयकं यत्साम्यन्द्वयोर्धर्मग्रन्थादिष्वाप्यते, तस्योपस्थापनमपि तेन समुद्रसङ्ग्रहे कृतम्।[31]

इन्द्रियविषयार्थसृजननाम्नि तृतीये विभागे यद्यपि घ्राणरसनचक्षुश्श्रोत्रत्वचाङ्क्रमशश्शाम्म-जामिक-वासिर-सामिअ-लामिसाख्यान् पदप्रयोगान् अथ चतुर्णामन्तरिन्द्रियाणाम्मनोबुद्धिचित्ताहङ्काराणां ख्याल-मुतसरिफ-हाफिज-वाहिमहि-सिमुथरकेति पञ्च पदप्रयोगान् प्रदर्श्य कथञ्चिन्मौलिकं साम्यन्निरूपयितुम्प्रयतते. दाराशिकोहस्तथाऽपि-''एतेषाम्पञ्चममन्तःकरणमिति वदन्ती''ति[32] तस्य विचारो वेदादिसम्मतो न प्रतिभाति। यतो वेदान्तसारे हि प्रतिपादितं ''बुद्धिर्नाम निश्चयात्मिकान्तः, मनो नाम सङ्कल्पविकल्पात्मिकान्तःकरणवृत्तिः। अनयोश्च चित्ताहङ्कारयोरन्तर्भावः।''[33] तस्मात्तुलनाऽभीप्सुकत्वेनापि

---

25. ..............., समुद्रसङ्गमः, पृ. सं.-6
26. (तैत्तिरीयोपनिषद्-2/1) ईशादि नौ उपनिषद्, पृ. सं.-362
27. ..............., समुद्रसङ्गमः, पृ. सं.-7
28. (ब्रह्मसूत्रम्-2/4/22 अत्रत्यञ्शाङ्करभाष्यञ्च)
    ब्रह्मसूत्रशाङ्करभाष्यम् (द्वितीयो भागः), सं.-कन्हैयालालजोशी, परिमलप्रकाशन, तृतीयसंस्करणम्-1996, पृ. सं.-653
    जीवितविषयत्वात् पालनपोषणत्वाद् वा श्रद्धाया विषयत्वेन देवीति प्रसिद्धव्यवहारः।
29. पृथिव्या औषधय, औषधीभ्योऽन्नम्, अन्नात् पुरुषः। स वा एष पुरुषोऽन्नरसमयः। (तै. उ. 2/1)
    ईशादि नौ उपनिषद्, पृ. सं.-362
30. सृष्टा अस्याः किलास्माभिर्यूयञ्च तदनन्तरम्।
    अस्यामेव परावृताः करिष्यध्वेऽत एव च। पुनस्सृष्टाः करिष्यध्वे। (सां. कु. 20/55)
    ..............., सांस्कृतङ्कुराणम्, पृ. सं.-141
31. ..............., समुद्रसङ्ग्रहः, पृ. सं.-40-41
32. ..............., समुद्रसङ्गमः, पृ.सं.-9
33. सदानन्दः, वेदान्तसारः, चौखम्बा कृष्णदास अकादमी, वाराणसी, नवम संस्करण-2011, पृ.सं.-65

दाराशिकोहेण प्रसङ्गेऽस्मिन् कथं साम्यमुल्लिखितमित्यालोचकैः परिभावनीयम्। इतोऽनन्तरन्दाराशिकोहद्वारोद्धृतस्य कुराणवचनद्वयस्य समत्वं वैदिकमतमभिलक्ष्य कर्तुञ्शक्यत एव। तद्यथा-

''व्योम्नाञ्च धरित्र्याश्च राज्यन्तस्यैव तिष्ठति। जीवयेन्मारयेच्चासौ सर्वसामर्थ्यभृत् स वै।।

स एवादिस्स एवान्तो मध्योऽसौ स बहिः पुनः। सर्वविद् वर्तते चासौ''[34], इति कुराणस्थसप्तपञ्चाशदध्यायस्य क्रमशो द्वितीयतृतीयायातयोर्भावसाम्यम्मुण्डकोपनिषद्वचने[35] परिशीलयितुञ्शक्यते। वैदिकेस्लामधर्ममतसाम्यम्प्रदर्शयता दाराशिकोहेणोद्धृतकुराणवचनानुवादानुसारम्-''ब्रूहि लोका भवेच्चेद् वा विचिकित्सा ममायने। (ज्ञायतां) खलु नैवेडे यूयमल्लाहतः पृथग्''।।[36] इत्यस्य समत्वं ''शुद्धचैतन्यं हि परिच्छिन्नं स्यामितीच्छया तत्क्षण एव परमात्मरूपम्बभूव''।[37] इत्यस्मिन् वशिष्ठवचनेऽनुशीलयितुञ्शक्यते। अतः परं वेदादिसम्मतसत्त्वरजस्तमोगुणेषु रजोगुणस्य साम्यन्न कुराणदृश विधातुञ्शक्यते, वस्तुतो गुणोऽयं वैदिकधर्मसम्मत एवेति निष्पक्षनयेन स्वयं समुद्रसङ्ग्रहकारो दाराशिकोहः-''तथाऽस्मद्वेदे नास्ति तत्सदृशं वस्तु''[38], इत्युल्लेखयति। एवमग्रे साम्यं विवेचयता तेन श्रवसनमाधृत्य ''सोऽहम्''[39], ''हु-अल्लाह[40], इत्यनयोर्मन्त्रयोर्भावैक्यम्प्रतिपादितम्। यदाश्वासस्योपरिगमनन्तदा सः, हु, इत्यनयोस्तथा श्वासस्य बहिरागमने च अहम् अल्लाहेत्यनयोश्च सङ्केतो जायत इति तात्पर्यन्तेन तोलितम्। द्वयोर्धर्ममतयोरनुसारन्तस्य शुद्धचैतन्यस्य परमेश्वरस्य नैकेष नामसु ततश्चान्येष्वपि नामसु भृशं साम्यनिरूपकन्तथ्यमप्यैक्यप्रतिपादनक्षममिति विवेचयति, समुद्रसङ्ग्रहकारः। तद्यथा-मुतलकहत्, इति शुद्धचैतन्यस्य सच्चिदानन्दरूपेण ख्यानम्, अल्लाहेत्यस्य ॐ इति, हु, इत्यस्य स इति, आलिमेत्यस्य ज्ञातेति, कादरेत्यस्य सामर्थ्यवान्निति, मुरीदेत्यस्य स्वतन्त्र इति, समीअ, इत्यस्य श्रोतेति, वसीरेत्यस्य दृष्टेति, मजहर-अतमेत्यस्य महावतार इति, अनेन रूपेण परमेश्वरनामार्थसाम्यवाप्यत एवेत्युल्लेखयति दाराशिकोहः।[41] परमेश्वरस्य नैकानि नामानीति वैदिकधर्मानुयायिषु प्रसिद्धमेव।[42] अत एव शतं सहस्रं वा भगवन्नाम्नां विष्णुसहस्रनामस्तोत्रादिषूल्लेखो बहुशोऽवाप्यते। एतावदेव 'अल्लाहेत्यस्य बहूनि किं वा नवनवतिसङ्ख्याकानि नामान्यपि प्रथितानीत्यत्रोल्लेखार्हम्।[43] अनयैव दिशया नाम्नामन्यत्वेऽपि

34. (सां.कु. 57/2-3)..............., सांस्कृतङ्कुराणम्, पृ.सं.-262
35. नित्यं विभुं सर्वगतं सुसूक्ष्मन्तदव्ययं यद्भूतयोनिम्परिपश्यन्ति धीराः...(मु.उ. 1/6)
    ईशादि नौ उपनिषद्, पृ.सं.-215
36. (सां.कु. 10/104)..............., सांस्कृतङ्कुराणम्, पृ.सं.-92
37. ..............., समुद्रसङ्गमः, पृ.सं.-12
38. ..............., समुद्रसङ्गमः, पृ.सं.-11
39. (बृ.उ. 1/4!2) बृहदारण्यकोपनिषत्, आनन्दाश्रमसंस्कृतग्रन्थालयः पूना, 1982, पृ.सं.-93
40. ..............., समुद्रसङ्गमः, पृ.सं.-14
41. ..............., समुद्रसङ्गमः, पृ.सं. 33-34
42. तदेवाग्निस्तदादित्यस्तद्वायुस्तद् चन्द्रमाः। तदेव शुक्रन्तद् ब्रह्म ता आपः स प्रजापतिः।। (शुक्लयजुर्वेदः 32/1)
    चतुर्वेद संहिता, सं.-स्वामी जगदीश्वरानन्द सरस्वती, विजयकुमार गोविन्दराम हासानन्द, दिल्ली, 1997, पृ.सं.-88
43. http://www.arabacademy.com/en/downloads/Learn-Arabic-English-translation-of99-names-of allah

वाच्यैक्यम्प्रतिपादयन् ग्रन्थकारोऽयम् अपौरुषेयस्य वेदस्य कुराणमिति पदेन, सज्जनस्य परीशब्देन, दुर्जनस्य देवशायातिशब्देन, राक्षसस्य जिन्नशब्देन, मनुष्यस्य, आदमीशब्देन, देवदूतस्य नवीशब्देन व्यवहार इत्युल्लेखति।[44] अनयोर्वैदिकेस्लामधर्मगतस्य परमेश्वरस्य विचार एव सर्वप्रमुखः। अत एव समुद्रसङ्गमेऽपि विचारोऽयम्प्रधानतया विमृष्टः।

परमेश्वरस्य स्वरूपङ्किमिति विविच्यमानो ग्रन्थकारस्तस्मिन् सगुणत्वन्निर्गुणत्वम् अनयोर्द्वयोश्च सत्त्वमिति बहुशो विचार्य सगुणनिर्गुणमिश्रितन्तदिति, इस्लामधर्मगतसूफीमतन्तथ्यत्वेन प्रतिपादयति।[45] ईदृशमेव मतं वैदिकधर्मगतभक्तिमार्गिणाम् सिद्धम्भवति। सूरतुलसीचैतन्यमहाप्रभुनामदेवादीनां समेकितम्मतममूमेव विचारन्ध्वनयति। वैदिकमतेऽपि निर्गुणत्वञ्शुद्धचैतन्यस्य ''स पर्यगाच्छुक्रमकायमव्रणमस्नाविरञ्शुद्धमपापविद्धम्''[46] इत्यादिदिशा सिद्ध्यति। ततश्च बुद्धमतानुयायिकालाद् ब्रह्मणि सगुणत्वाधारेण मूर्त्तिपूजनादिकम्प्रारम्भताङ्गतम्। यद्यपि ''सुपर्णं विप्राः कवयो वचोभिरेकं सन्तम्बहुधा कल्पयन्ती'ति[47] पमेश्वरैक्यप्रतिपादको वेदविचारस्तथाऽपि ब्रह्मणि सगुणत्वनिर्गुणत्वयोर्यथामति निरूपणम्भक्तिमार्गिभिरुपदिष्टम्। एवं सगुणत्वमाधृत्य यथा परमेश्वरस्य रामकृष्णदीनामवतारविचारः पौराणिकसम्मतस्तद्वदेव महावतारस्य मजहर-आतम' इत्यादिविमर्श इस्लामसम्मतं सगुणत्वमेव प्रतिपादयति। यतस्साधारणस्वभावो हि जनो न साक्षात्तम्परमेश्वरञ्ज्ञातुञ्शक्नुयात् तस्मादेव सगुणत्वम्, ततश्च निर्गुणब्रह्मस्वरूपप्रतिपादनं सम्भवति।[48] एवं सर्व विचार्य भक्तिसूफीमतसम्पोषकाणां परमेश्वरसम्बद्धं विचारसाम्यम्प्रतिफलितन्दृश्यते। एवमेव जिबरईल-मीकाइल-इसराफिलेत्येषाम्ब्रह्मविष्णुमहेश रूपेण साम्यदर्शनङ्ग्रन्थकारेणोल्लिखितम्। यतो ब्रह्मविष्णुमहेशानाङ्क्रमश उत्पत्तिप्रतिपालन-संहाराधिष्ठातृत्वम्पुराणप्रसिद्धम्[49], तद्वदेवेस्लामधर्ममान्यतानुसारञ्जिबरईलादीनामपि परमेश्वरेच्छाऽनुरूपं सर्वङ्कर्मेति साम्यम्पुरस्करोति समुद्रसङ्ग्रहकारः। प्रलयविषयेऽपि यथा कुराणानुसारन्दाराशिकोहः कमायते-सुवरा (खण्डप्रलयः), कमायते-कुवरा (महाप्रलयः), इत्यनयोर्विवरणम्प्रयच्छति[50] तस्य साम्यमपि पुराणेष्वनुशीलयितुञ्शक्यत एव। तद्यथा-''नित्यो नैमित्तिकश्चैव तथा प्राकृतिको लयः। आत्यन्तिकश्च कथितः कालस्य गतिरीदृशी।''[51] इति। महाप्रलयानन्तरमपि ब्रह्माण्डस्यानादिप्रवाहता

44. ..............., समुद्रसङ्गमः, पृ.सं.-34
45. ..............., समुद्रसङ्गमः, पृ.सं.-34-37
46. (ई. उ. 8) ईशादि नौ उपनिषद्, पृ.सं.-8
47. (ऋ. 10/114/5) वैदिक संहिता, सं. सी.जी. काशीकरादयः, वैदिक संशोधन मण्डल, पूना, 1946, पृ.सं.-787
48. सैय्यद अब्दुल्लाह तारिक, वही एक एकता का आधार (प्रथम भाग-सनातन धर्म), रौशनी पब्लिशिंग हाउस, रामपुर संशोधित संस्करण-2011, पृ.सं.-12
49. अहम्ब्रह्मा च शर्वश्च जगतः कारणम्परम्। आत्मेश्वर उपद्रष्ट्रा स्वयन्दृगविशेषणः।।
आत्ममायां समाविश्य सोऽहङ्गुणमयी द्विजः। सृजन् रक्षन् हरन् विश्वन्दध्रे सञ्ज्ञाङ्क्रियोचिताम्।।
(श्रीमद्भा. महा. 4/7/50-51) व्यासः, श्रीमद्भागवतमहापुराणम्, चौखम्बा सुरभारती प्रकाशन, वाराणसी, अष्टदश संस्करण 1998, पृ.सं.-159
50. ..............., समुद्रसङ्ग्रहः, पृ.सं.-56
51. (श्रीमद्भ. महा. 12/4/38)..............., श्रीमद्भागवतमहापुराणम्, पृ.सं.-656

पौराणिकसम्मता[52] तथैवानेन कुराणवचनेनापि प्रतिपाद्यते-''तस्य तन्महिम्नोऽस्ति प्रतिकूलं हि सर्वथा। अल्लाहोऽसौ पुनस्स्रष्टा तथैवाकृतितत्परः।।''[53] ततश्च जगच्चतुष्टयन्निरूपयन् ग्रन्थकारो नासूत-मलकूत-जबरूत-लाहूतेत्येषां[54] साम्यञ्जाग्रत्स्वप्नसुषुप्तितुरीयावस्थाभिस्सङ्केतयति।[55] मुक्तिविषयञ्च निरूपयता तेन दाराशिकोहेण सम्पूर्णे ब्रह्माण्डे परमेश्वरदर्शनस्य याऽलौकिकी कल्पना दिग्दर्शिता[56] तस्यास्समत्वङ्गीताया एकादशाध्यायस्थेन भगवद्विराट्स्वरूपवर्णेन यथा कथञ्चिज्जायते। तथात्वेऽपि न न्यूनीभवत्यनेन तदीयसाम्यनिरूपणामिदमिति सुधियः प्रमाणम्। समुद्रसङ्ग्रहकारो दाराशिकोहऽप्रति-हतसाम्याभीप्सुकया मत्या पौराणिकसमुद्रमथनविषयम्प्रतीकतयोद्धृत्य यया दिशा ''विष्णुरूपात्मन इच्छया स्वीयमनोमन्दराचलङ्कृत्वा सङ्कल्पविकल्पान् दैवदैत्यान् कृत्वा वेदसमुद्रम्मथित्वा ज्ञानरत्नमेकमीदृशन्निष्कासितं यद् देवैर्दैत्यैश्च समुद्रमथनङ्कृत्वा निष्कासितेषु चतुर्दशरत्नेष्वपि न प्राप्तम्'' इति विशदयति तया समासतो वैदिकेस्लामधर्ममतानुयायिवृन्दयोः परस्परं तस्य साम्यदर्शनोद्देश्यन्द्वयोरैक्यवर्धनञ्च स्पष्टायेते। वैदिकेस्लामधर्ममतयोर्यत् साम्यं समुद्रसङ्ग्रहकारेणाधिगम्य यथा निरूपितम् अथ तत्रत्यसाम्यविवरणस्य मौलिकन्तथ्यञ्चानया दिशाऽत्रोपस्थापितम्।

इदानीमस्य प्रासङ्गिकत्वं विचार्यमाणे वैदिकेस्लामधर्ममतानुयायिभ्याम्परस्परं व्यवहृता व्यवह्रियमाणाश्चाचारा विचाराश्च विवेचनीयताम्भजन्ते। प्रायशोऽनयोर्धर्ममतानुयायिनोर्मध्ये शारीरिकस्य वैचारिकस्य च सङ्घर्षस्येतिहास इति प्रसिद्धम्। कीदृशोऽपि सङ्घर्षश्च कयोश्चिद् वर्गयोर्मध्ये दयाप्रदानेन हिंसया च भवतीत्यपि प्रथितिः।[57] तत्रारबदेशदिवासिनाम् इस्लामधर्मानुयायिनां वैदिकधर्मानुयायिनाञ्च मध्ये परस्परं सङ्घर्षस्य मूलमियं हिंसैव सिद्ध्यति। यतोऽरबवासिनोऽन्ये च कालानुसारिण आगन्तार आततायिन इस्लामधर्मम्मन्यमाना एव भारतदेशीयाञ्जनान्! हिंसाऽऽदिव्याजेन वैदिकधर्माद् विमुखीकृत्य स्वकीये धर्मे प्रयुक्तवन्तः। इस्लामनामकोऽयन्धर्म एतद्धर्मानुयायिभिरन्यान् सर्वान् धर्मान्न्यक्कृत्य प्रसारितम्प्रसार्यते चेत्यैतिहासिकप्रमाणैरथाधुनिकतथ्यैस्तथा स्वयङ्कुराणवचनेनापि[58] साधितमिव प्रतीयते परं स्वयङ्कुराणवचनप्रामाण्येन तन्मर्मज्ञैश्चान्यधर्मानुयायिनान्धर्मपरिवर्तनं साक्षादेव निषिद्धमस्तीति सिद्धम्भवति।[59] एवन्धर्मोऽयमपि वैदिकधर्मवत् सहिष्णुरेवेति साम्यमिदम्परिशीलयितुञ्शक्यते।

---

52. यथा संहरते जन्तून् ससर्ज च पुनः पुनः। अनादिनिधनो ब्रह्मा नित्यश्चाक्षर एव च।।
(महा. शान्तिपर्व 312/2), व्यासः, महाभारतम् (शान्तिपर्व), सं.-दामोदर सातवलेकर, स्वाध्याय मण्डल, पारडी, प्रथम संस्करण-1973
53. (सां.कु. 59/55)..............., सांस्कृतङ्कुराणम्, पृ.सं.-268
54. ..............., समुद्रसङ्ग्रहः, पृ.सं.-18
55. (माण्डूक्योपनिषद् 2-7) ईशादि नौ उपनिषद्, पृ.सं.-270
56. ..............., समुद्रसङ्ग्रहः, पृ.सं.-48-52
57. वेदकुमारी घई, ''प्राचीन संस्कृत साहित्य में सङ्घर्षों का समाधान'', स्मारिका, संस्कृत विभाग जम्मू विश्वविद्यालय, प्रथम संस्करणम्-2006, पृ.सं.-41
58. नाङ्गीकुर्वन्ति धर्मन्तु युध्यस्व तैस्समङ्किल। अप्रतिष्ठां व्रजेयुर्यत्ते तथोपनयन्तु च।। (सां. कु. 9/29)
..............., सांस्कृतङ्कुराणम्, पृ.सं.-80
59. न कोऽपि विवशीभावः प्रणाली विषये मतः। (सां. कु. 2/256) ..............., सांस्कृतङ्कुराणम्, पृ.सं.-16

यद्यपि कुराणवचनानां विविधार्थोपन्यासः[60], अथ दयानन्दसरस्वती[61] वी.एस. नॉयपाल[62] आदिव्याख्यातृणाम्मतञ्चेस्लामधर्मस्य तद्धार्मिकाणञ्च हिंसापूर्णञ्जीवनोद्देश्यम्प्रतिपादयतीव प्रतीयते तथाऽपि विविधदृक्कोणतो विचार्यमाणे सति तथ्यं सर्वन्न स्वीकर्तुञ्शक्यम्, तद्यथा तेषामिस्लामधर्मानुयायिनाङ्कुराण एव हिंसाऽऽत्मरक्षार्थमेव केवलम्प्रयोज्या नान्यप्रयोजनार्थमिति साक्षादुपदिष्टमस्ति।[63]

भारतन्धर्मनिरपेक्षं राष्ट्रम् अर्थाद् धर्मनिरपेक्षाया राष्ट्रियतायाः प्रसङ्गे नात्र कस्यचिदपि धर्मस्य प्राधान्यङ्कि वा राष्ट्रिया भावनैव यत्र प्राधान्यम्भजते न किञ्चिदपि धर्ममतम्, तदेव भवति धर्मनिरपेक्षराष्ट्रस्य स्वरूपम्।[64] ईदृशे धर्मनिरपेक्षे भारतराष्ट्रे वैदिकेस्लामधर्मानुयायिनान्धर्ममतमाधृत्य न कश्चन विरोधभावस्यात् तदर्थङ्क्रियमाणेषूपक्रमेषु साहित्यैक्यम्प्रमुखं स्थानम्भजते। तत्र च धर्मभावसाम्यप्रतिपादकं साहित्यविलेखनमतिशायि। यद्यप्येतादृशसाहित्यविलेखनम्बह्वल्पमेवाद्यावधि जातन्तथाऽप्येतेष्वल्पविलेखनेषु दाराशिकोहविरचितसमुद्रसङ्गमनामा धर्मसाम्यप्रतिपादक उपदेशात्मकश्च शास्त्रीयो ग्रन्थविशेषो वैदिकेस्लामधर्मयोस्साम्यदृशाऽद्वितीयमेव स्थानमावहतीति सिद्धम्भवति। अद्यावधि विज्ञानयुगीन वयन्तथाऽपि धार्मिक्यो भावना अपि न तथा गौणायन्त इत्यनुभवितुञ्शक्यत एव। तस्मादेव प्रथिततीर्थानां व्यवस्थापनं सौन्दर्यीकरणन्तीर्थयात्रिणाञ्च सौविध्यवर्धनम्, एवमेवान्यान्यधर्मविषयान् प्रत्यवधानन्तद्यथा हजनामयात्राविशेषेऽनुदानोद्घोषणम्मठस्तूपविनिर्माणादिकञ्च सर्वन्धार्मिकीम्भावनामेव प्रधानीभूय विशदयन्ति। तस्माद् आधुनिके धर्मविमुखे समाजे धर्मविचाराणाङ्कथमप्यवस्थिते सति समुद्रसङ्गमसदृशं साहित्यम् अद्यावधि विनिश्चयम् अहर्निशम्प्रासङ्गिकमेव स्थास्यत्तीति।

---

60. लक्ष्मीशङ्कराचार्य, इस्लाम आतङ्क या आदर्श?, भारतीय जनसेवा प्रकाशन, लखनऊ, संशोधित संस्करण 2011, पृ.सं.-32
61. ..............., इस्लाम आतङ्क या आदर्श?, पृ.सं.-53
62. Mushiral Hasan, "Sustaning the myth of hostility", The Hindu, Vol-135, No. 267, Delhi, 7 November, P.P 10
63. (कुरआन 2/90, 2/179)..............., इस्लाम आतङ्क या आदर्श? पृ.सं.-64-65
64. श्यामाचरण दूबे, परम्परा और परिवर्तन, भारतीय ज्ञानपीठ, नई दिल्ली, द्वितीय संस्करण-2003, पृ.सं.-101

# काव्यशास्त्रीया निबन्धाः

देवर्षिकलानाथशास्त्री

संस्कृतकाव्यसंसारे ग़ज़लप्रभृतिनूतनविधानां, कवित्त-चौपाई-दोहादिनूतनच्छन्दसां प्रवर्तकः, "संस्कृतरत्नाकर''सम्पादकत्वेन संस्कृतपत्रकारतायां नूतनस्तम्भानां पुरोधाः, संस्कृते ललितनिबन्ध-यात्रावृत्त-चमत्कारात्मकनिबन्धादीनामानेता कविशिरोमणि-देवर्षि भट्टश्रीमथुरानाथशास्त्री ''मञ्जुनाथः" काव्यशास्त्रमनीषी "रसगङ्गाधर" सम्पादकोऽप्यभूत्, तैलङ्गकुलकौस्तुभस्य पण्डितराजजगन्नाथस्य सजातीयत्वेन विविधशास्त्रवैचक्षण्यसंस्कृतकाव्यशास्त्रप्रतिपादनपराणामनेकेषां शोधनिबन्धानां प्रणेताऽप्यभूत्। आधुनिकसंस्कृतसाहित्येतिहासकारैराधुनिककालीनं = 1930 ई० तः 1960 ई. पर्यन्तं प्रसृतं युगं भट्टयुगत्वेन व्यपदिष्टमनेनैव कारणेन यदेतस्मिन् युगे भट्टपादानां विविधविधासु सृष्टं साहित्यं संस्कृतजगति नूतनयुगावतारणामकार्षीत्। भट्टपादानां समग्रग्रन्थावली "मञ्जुनाथग्रन्थावलि" नाम्ना राष्ट्रियसंस्कृतसंस्थानेन प्रकाश्यमानाऽस्ति यस्यां विशालाः पञ्च खण्डाः प्रकाशितचराः।

भट्टमथुरानाथशास्त्रिणां काव्यशास्त्रीया निबन्धा बहोः कालादप्रकाशिता आसन्। तेषां सङ्कलनं श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठेन (मानितविश्वविद्यालयेन) तत्कुलपतिवर्याणां प्रो. वाचस्पत्युपाध्यायानां सत्प्रयासपरिणतिस्वरूपं प्रकाशितं यत्र काव्यशास्त्रे रसलक्षणविमर्शकः, काव्य-लक्षणविमर्शकश्चेति निबन्धद्वयमलङ्कारशास्त्रं विमृशति, विक्रमाङ्कदेवचरित-प्रणेतुर्बिल्हणमहाकवेः कृतित्वविमर्शको निबन्धः कविकृतिविमर्शं प्रस्तौति, कथमेक एव भावः पर्यायाणां, क्रियापदानां, विविधधातूनां, विच्छित्तिविधानां च कौशलेन शतशो रूपेण समभिव्यञ्जयितुं शक्यत इत्यस्य सहस्रशो हृदयावर्जकानामुदाहरणानां प्रस्तुतिपूर्वकं प्रदर्शनं शिक्षणं च कुर्वाणः प्रयोक्तॄणां मार्गदर्शको विलक्षणो निबन्धश्च भाषाप्रयोगविधीनुपदिशति। इत्थं नूतनान् पथः प्रदर्शयतां निबन्धानामयं संग्रहो ग्रन्थकर्तुस्तनूजेन देवर्षिकलानाथशास्त्रिणा लेखकपरिचयसहकृतविस्तृतभूमिकासहितः सम्पादितो निश्चप्रचमेवाह्लादयिष्यति सुधियां पाठकानां मनांसि। ग्रन्थस्यास्य प्रकाशनं लोकार्पणं च विद्यापीठ (विश्वविद्यालय)स्य दीक्षान्तसमारोहावसरे कुलपतीनां प्रो. वाचस्पत्युपाध्यायानां सांनिध्ये समभूत्। तदनन्तरं ते दिवमारूढा इति सूचयन्तः शोकार्तिमनुभवामः किन्तु ग्रन्थोऽयं चिरस्मरणीयः स्थास्यतीति निश्चप्रचं विश्वसिमः।

भट्टमथुरानाथस्य काव्यशास्त्रीया निबन्धाः, प्रधानसम्पादकः प्रो. वाचस्पत्युपाध्यायः, सम्पादकौ प्रो. देवर्षिकलानाथशास्त्री प्रो. रमेशकुमारपाण्डेयश्च, प्रका. श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठम्, नई दिल्ली 16, पृ. सं. 140 मू. 90/=

## संस्कृतेऽप्यवतीर्णा सेयं गीतिविधा

मुम्बईस्थ बृहन्मन्दिराधीशानां (मोटामन्दिर इत्यस्य संस्कृतीकरणपरिणतौ) श्रीवल्लभाचार्यवंशजानामूनविंशशताब्दीपूर्वार्धजन्मनां विद्वद्वरगोस्वामि श्रीजीवनजीमहाराजानामप्रकाशित-रचनाप्रकाशनप्रयासस्य फलस्वरूपं सपद्येव मुद्रिते एकस्मिन् पुस्तके गुर्जरलिप्यां "श्रीनाथजी सुहामणा" शीर्षकं बिभ्राणे तद्रचितां गङ्गास्तुतिपरां द्विपदीं (गीतिद्वयं) यमुनास्तुतिपरां चतुष्पदीं (गीतिचतुष्टयं) च वीक्ष्यास्मन्मनसि कौतूहल-जिज्ञासादिभावशबलता समुदभूत्तत्र प्रयुक्तं छन्द उपलक्ष्य। सेयं यमुना-चतुष्पदी कस्मिन् छन्दसि निबद्धेति प्रथमा जिज्ञासाऽभूत्। एतस्या द्वितीयं पद्यमित्थमस्ति-

**कमलनिलया-निलयकमलनयनानयनपृथुसुखदशुचिसरणिनीलधामा।**
**सुरऋषभदृषत्सम-भुवन-नव-कञ्जमकरन्दरसपायिमधुपाभिरामा।**

गङ्गाद्विपद्या द्वितीयं पद्यमपि तस्मिन्नेव छन्दसि (लये वा) निबद्धमित्थमस्ति-

**शिखरितनयानयन-रोलम्बचुम्बिते दूरकृतदुरितदुर्गन्धजाले।**
**जीवनं भक्तजनजीवनं तव यतस्त्रिविधतापापहं मुक्तिशाले।**

किमिदं छन्दः, केयं गीतिः? तल्लक्षणं कुत्रचनान्विष्येतेति धियाऽस्माभिर्गीतिद्वयस्यास्य सुललितव्रजभाषानिबद्धा टीकाऽवलोकिता या हि विलक्षणशेमुषीजुषा विद्वत्कुलचूडामणिना पं. श्रीगोवर्धन शर्मणा पञ्चनदिगट्टूलालाजीतिप्रथितनाम्ना प्रणीताऽस्ति। तस्यां छन्दोविचितिस्तु न सूचिता, केवलं गीतिरियं द्विपदी कथ्यते, संगीते प्रसिद्धा, रत्नावल्यामप्यस्तीत्यादि संसूच्य व्याख्या विहिता। द्विपदीति छन्दोनाम नास्तीति तु स्पष्टमेव, गीतिरचयित्रा द्विपदी संज्ञा तु पद्यद्वयमस्तीतिकृत्वा प्रत्ता, अन्यथा यमुना-चतुष्पदीगीतेर्नाम चतुष्पदीशीर्षकरूपं नाऽभविष्यद्यदि तत्रापीदं छन्दोऽभविष्यत्। तत्रापीदमेव छन्दः, अयमेव लयः इत्युदाहरणद्वयेनोपर्यवलोक्यत एव स्पष्टम्। अतस्तस्या गीतेर्नाम यमुनाद्विपदीति नास्ति, यमुना-चतुष्पदीत्यस्ति। अनेन सिध्यति यदस्या गीतेश्छन्दसो नामकरणं द्विपदीति नास्त्येव। रत्नावल्यादिनाटिकासु कुत्राप्यस्मिंश्छन्दसि निबद्धा काचनापि गीतिर्नोपलभ्यत इति तु स्पष्टमेव द्रष्टुं शक्यते। विद्वद्वर्यस्य टीकाकर्तुराशयोऽत्रायमेव प्रतीतये यत्सङ्गीतस्य काचन विधाऽस्या गीतेराधारः, अतश्छन्दोऽभिधानं नावश्यकम्। अत एवास्या लक्षणादि कुत्रापि नाऽभिहितं, केवलमिदमेवोक्तं यद्गीतावस्यां चर्चरीतालः प्रयुज्यते, कस्मिन् रागे निबध्येतेति न नियमः, कस्मिन्नपि रागे भवेत् किन्तु प्रातः कालीनमिदं स्तवनमिति कृत्वा भैरवीरागे गीयतामित्यादि यमुना चतुष्पदीव्याख्याप्रारम्भे व्रजभाषायां विलिखितमत्र दृश्यते।

यदि शोधदृशाऽत्रत्यं वस्तुसत्यं गवेष्येत चेदनेकानि चेतः प्रसादकान्यमूल्यानि तथ्यान्युद्भविष्यन्तीति दृशाऽत्र किञ्चिन्निवेदयितुमुत्सहे। प्राकृत-व्रजभाषा-अवधी-प्रभृति लोकभाषासाहित्यसागरस्य मर्मज्ञाः सुष्ठु जानन्त्येव यन्मध्यकाले (त्रयोदशीं शताब्दीमारभ्याष्टादशशताब्दीपर्यन्तं) निर्गुणोपासकानां सगुणभक्ति-प्रवणानां चेति द्विविधानामपि साहित्यप्रणेतृणां साहित्ये यस्याभिधानं चिकीर्षद्भिः साहित्येतिहासकारैः

"सन्त-साहित्य"- "भक्त-साहित्य अथवा भक्ति साहित्य" इति संज्ञाद्वयं द्वयोरप्यनयोः स्पष्टं भेदकं व्याख्याय प्रत्तमस्ति, एतस्मिंश्छन्दसि निबद्धाः सहस्रशो गीतयः सुप्रथिताः सन्ति। तास्ताल-लयादि-विधाभिर्गीयन्ते स्मापि, विना सङ्गीतमपि सस्वरमुच्चार्यन्ते स्म, अद्याप्युच्चार्यन्ते। को न जानाति हिन्दीकविं तुलसीदासं येन विनयपत्रिकायामस्मिन्नेव च्छन्दस्यस्मिन्नेव लये, अस्यामेव शैल्यामनेका गीतयो रचिता अद्यापि भक्तानां कण्ठगताः सन्ति। को न जानाति विश्वविश्रुतं सिक्खपथप्रवर्तकं गुरुं नानकं येन निबद्धा नीराजनगीतिरद्यापि लक्षशः सिक्खपरिवारेषु विश्वस्मिन्नपि विश्वे गीयते, साऽस्मिन्नेव च्छन्दस्यस्यामेव शैल्यामस्ति। अद्भुतप्रभावकरी सेयं नीराजनगीतिः-

**"गगनमय थाल रवि चन्द्र दीपक बने तारकामण्डल कनक मोती।**
**धूप मलयानिल ओ पवन चँवरउ करे सकल बनराजि फूलन्त जोती।**
**ऐसि ये तेरि भवखंडना आरती अनहता सबद बाजन्त भेरी॥" ( गुरुग्रन्थ साहब )**

सेयं शैली, तदिदं छन्दो मध्यकालिकशताब्दीषु सुभृशं प्रसृतं जनप्रियं चासीदिति स्पष्टं यतः सर्वैरपि सन्त-भक्तिसाहित्यकारैरस्मिन् प्रार्थनागीतयो विरचिताः। तुलसीदासस्य हनूमत्स्तुतिरपि सुतरामद्भुतप्रभावशालिन्यद्यापि सुप्रथिता - "जयति मङ्गलागार संसारभारापहर वानराकारविग्रह पुरारी। राम-रोषानल ज्वालमाला-मिष-ध्वान्तचरशलभसंहारकारी॥" (विनयपत्रिका)

एवंविधा लक्षशो गीतयोऽस्मिन्नेव च्छन्दसि निबद्धा मध्यकाले विविधभारतीयभाषाणां भक्तिसाहित्ये समुपलभ्यन्ते। पिंगलच्छन्दःशास्त्रसुधीभिर्लक्षणकारैरिमाः सर्वा गीतय इति मत्वा छन्दसोऽस्य लक्षणमेव न वर्णितं स्यादिति किं संभवति? मध्यकालीनैर्लक्षणकारैरिदं मात्रिकं छन्दः, "झूलना" इत्यस्य नामेति स्पष्टमुदीरितं, लक्षणमपि स्पष्टीकृतम्। सप्तत्रिंशन्मात्रिकमिदं छन्दः (37), अन्ते यगणो भवतीति वार्णिकनियमोऽप्यत्राङ्गीभूतोऽस्तीति कथान्तरम्। सर्वेषु पूर्वोद्धृतेषु गीतिबन्धेष्विदं लक्षणमन्वेतीति स्पष्टमेव।

अस्मिन् झूलनाख्ये छन्दसि मध्यकाले स्तवनप्रणयनं सुप्रचलिता प्रथाऽऽसीदिति विवरणेनानेन स्पष्टीभवति। तदिदं स्तुतिसाहित्यं केवलं लोकभाषास्वेव प्रथितं भवेन्न संस्कृते इति न शक्यते वक्तुम्। एतस्य प्रमापकान्युपर्युद्धृतान्युदाहरणानि सन्त्येव। अन्यदपि सुमहत् स्तुतिसाहित्यमेवंविध मस्मिंश्छन्दसि निबद्धं स्यादेव संस्कृतेऽपीति रुचिकरोऽन्वेषणविणयः। नवीनेषु वार्णिकेतरेषु च्छन्दःसु गीतिविधासु च स्तुतिलेखनं मध्यकाले सुमहति परिमाणेऽभूदिति तु साहित्येतिहासकारा व्याचक्षत एव। कथं संस्कृतेऽन्यानि च्छन्दांसि पर्यगृह्यन्तेत्यस्मिन् विषये बहुभिर्विद्वद्भी रोचकः शोधो विहितोऽस्ति। सम्प्रति स्मरामि यच्चैतन्यसम्प्रदायस्य सुप्रथितेन मूर्धन्यविदुषा मध्यकालीनेन श्रीगदाधरभट्टेनापि संस्कृते यमुनास्तुतिरेवंविधे एव च्छन्दसि (न वै झूलनाच्छन्दसि) निबद्धाऽभूत् - "जयति यमुनाऽभिधा जयति जगदम्बा। पुण्यपयसा न पावयति किल कं वा? सुगमनवसुभगजलदाभजलपूरा। निखिलकलिकलुषौघनिर्दलनशूरा।" इत्यादि। सर्वमिदं नूतनस्य रुचिकरस्य संग्राह्यस्य चानुसन्धानस्य विषय इति प्रसङ्गवशादत्र निवेदितम्।

## संस्कृतेऽप्यवतीर्णा सेयं गीतिविधा

मुम्बईस्थ बृहन्मन्दिराधीशानां (मोटामन्दिर इत्यस्य संस्कृतीकरणपरिणतौ) श्रीवल्लभाचार्यवंशजानामूनविंशशताब्दीपूर्वार्धजन्मनां विद्वद्वरगोस्वामि श्रीजीवनजीमहाराजानामप्रकाशित-रचनाप्रकाशनप्रयासस्य फलस्वरूपं सपद्येव मुद्रिते एकस्मिन् पुस्तके गुर्जरलिप्यां "श्रीनाथजी सुहामणा" शीर्षकं बिभ्राणे तद्रचितां गङ्गास्तुतिपरां द्विपदीं (गीतिद्वयं) यमुनास्तुतिपरां चतुष्पदीं (गीतिचतुष्टयं) च वीक्ष्यास्मन्मनसि कौतूहल-जिज्ञासादिभावशबलता समुदभूत्तत्र प्रयुक्तं छन्द उपलक्ष्य। सेयं यमुना-चतुष्पदी कस्मिन् छन्दसि निबद्धेति प्रथमा जिज्ञासाऽभूत्। एतस्या द्वितीयं पद्यमित्थमस्ति-

**कमलनिलया-निलयकमलनयनानयनपृथुसुखदशुचिसरणिनीलधामा।**
**सुरऋषभदृषत्सम-भुवन-नव-कञ्जमकरन्दरसपायिमधुपाभिरामा।**

गङ्गाद्विपद्या द्वितीयं पद्यमपि तस्मिन्नेव छन्दसि (लये वा) निबद्धमित्थमस्ति-

**शिखरितनयानयन-रोलम्बचुम्बिते दूरकृतदुरितदुर्गन्धजाले।**
**जीवनं भक्तजनजीवनं तव यतस्त्रिविधतापापहं मुक्तिशाले।**

किमिदं छन्दः, केयं गीतिः? तल्लक्षणं कुत्रचनान्विष्येतेति धियाऽस्माभिर्गीतिद्वयस्यास्य सुललितव्रजभाषानिबद्धा टीकाऽवलोकिता या हि विलक्षणशेमुषीजुषा विद्वत्कुलचूडामणिना पं. श्रीगोवर्धन शर्मणा पञ्चनदिगट्टूलालाजीतिप्रथितनाम्ना प्रणीताऽस्ति। तस्यां छन्दोविचितिस्तु न सूचिता, केवलं गीतिरियं द्विपदी कथ्यते, संगीते प्रसिद्धा, रत्नावल्यामप्यस्तीत्यादि संसूच्य व्याख्या विहिता। द्विपदीति छन्दोनाम नास्तीति तु स्पष्टमेव, गीतिरचयित्रा द्विपदी संज्ञा तु पद्यद्वयमस्तीतिकृत्वा प्रत्ता, अन्यथा यमुना-चतुष्पदीगीतेर्नाम चतुष्पदीशीर्षकरूपं नाऽभविष्यद्यदि तत्रापीदं छन्दोऽभविष्यत्। तत्रापीदमेव छन्दः, अयमेव लयः इत्युदाहरणद्वयेनोपर्यवलोक्यत एव स्पष्टम्। अतस्तस्या गीतेर्नाम यमुनाद्विपदीति नास्ति, यमुना-चतुष्पदीत्यस्ति। अनेन सिध्यति यदस्या गीतेश्छन्दसो नामकरणं द्विपदीति नास्त्येव। रत्नावल्यादिनाटिकासु कुत्राप्यस्मिंश्छन्दसि निबद्धा काचनापि गीतिर्नोपलभ्यत इति तु स्पष्टमेव द्रष्टुं शक्यते। विद्वद्वर्यस्य टीकाकर्तुराशयोऽत्रायमेव प्रतीतये यत्सङ्गीतस्य काचन विधाऽस्या गीतेराधारः, अतश्छन्दोऽभिधानं नावश्यकम्। अत एवास्या लक्षणादि कुत्रापि नाऽभिहितं, केवलमिदमेवोक्तं यद्गीतावस्यां चर्चरीतालः प्रयुज्यते, कस्मिन् रागे निबध्येतेति न नियमः, कस्मिन्नपि रागे भवेत् किन्तु प्रातः कालीनमिदं स्तवनमिति कृत्वा भैरवीरागे गीयतामित्यादि यमुना चतुष्पदीव्याख्याप्रारम्भे व्रजभाषायां विलिखितमत्र दृश्यते।

यदि शोधदृशाऽत्रत्यं वस्तुसत्यं गवेष्येत चेदनेकानि चेतः प्रसादकान्यमूल्यानि तथ्यान्युद्भविष्यन्तीति दृशाऽत्र किञ्चिन्निवेदयितुमुत्सहे। प्राकृत-व्रजभाषा-अवधी-प्रभृति लोकभाषासाहित्यसागरस्य मर्मज्ञाः सुष्ठु जानन्त्येव यन्मध्यकाले (त्रयोदशीं शताब्दीमारभ्याष्टादशशताब्दीपर्यन्तं) निर्गुणोपासकानां सगुणभक्ति-प्रवणानां चेति द्विविधानामपि साहित्यप्रणेतृणां साहित्ये यस्याभिधानं चिकीर्षद्भिः साहित्येतिहासकारैः

"सन्त-साहित्य"- "भक्त-साहित्य अथवा भक्ति साहित्य" इति संज्ञाद्वयं द्वयोरप्यनयोः स्पष्टं भेदकं व्याख्याय प्रत्तमस्ति, एतस्मिंश्छन्दसि निबद्धाः सहस्रशो गीतयः सुप्रथिताः सन्ति। तास्ताल-लयादि-विधाभिर्गीयन्ते स्मापि, विना सङ्गीतमपि सस्वरमुच्चार्यन्ते स्म, अद्याप्युच्चार्यन्ते। को न जानाति हिन्दीकविं तुलसीदासं येन विनयपत्रिकायामस्मिन्नेव च्छन्दस्यस्मिन्नेव लये, अस्यामेव शैल्यामनेका गीतयो रचिता अद्यापि भक्तानां कण्ठगताः सन्ति। को न जानाति विश्वविश्रुतं सिक्खपथप्रवर्तकं गुरुं नानकं येन निबद्धा नीराजनगीतिरद्यापि लक्षशः सिक्खपरिवारेषु विश्वस्मिन्नपि विश्वे गीयते, साऽस्मिन्नेव च्छन्दस्यस्यामेव शैल्यामस्ति। अद्भुतप्रभावकरी सेयं नीराजनगीतिः-

**"गगनमय थाल रवि चन्द्र दीपक बने तारकामण्डल कनक मोती।**
**धूप मलयानिल ओ पवन चँवरउ करे सकल बनराजि फूलन्त जोती।**
**ऐसि ये तेरि भवखंडना आरती अनहता सबद बाजन्त भेरी॥" (गुरुग्रन्थ साहब)**

सेयं शैली, तदिदं छन्दो मध्यकालिकशताब्दीषु सुभृशं प्रसृतं जनप्रियं चासीदिति स्पष्टं यतः सर्वैरपि सन्त-भक्तिसाहित्यकारैरस्मिन् प्रार्थनागीतयो विरचिताः। तुलसीदासस्य हनूमत्स्तुतिरपि सुतरामद्भुतप्रभावशालिन्यद्यापि सुप्रथिता - "जयति मङ्गलागार संसारभारापहर वानराकारविग्रह पुरारी। राम-रोषानल ज्वालमाला-मिष-ध्वान्तचरशलभसंहारकारी॥" (विनयपत्रिका)

एवंविधा लक्षशो गीतयोऽस्मिन्नेव च्छन्दसि निबद्धा मध्यकाले विविधभारतीयभाषाणां भक्तिसाहित्ये समुपलभ्यन्ते। पिंगलच्छन्दःशास्त्रसुधीभिर्लक्षणकारैरिमाः सर्वा गीतय इति मत्वा छन्दसोऽस्य लक्षणमेव न वर्णितं स्यादिति किं संभवति? मध्यकालीनैर्लक्षणकारैरिदं मात्रिकं छन्दः, "झूलना" इत्यस्य नामेति स्पष्टमुदीरितं, लक्षणमपि स्पष्टीकृतम्। सप्तत्रिंशन्मात्रिकमिदं छन्दः (37), अन्ते यगणो भवतीति वार्णिकनियमोऽप्यत्राङ्गीभूतोऽस्तीति कथान्तरम्। सर्वेषु पूर्वोद्धृतेषु गीतिबन्धेष्विदं लक्षणमन्वेतीति स्पष्टमेव।

अस्मिन् झूलनाख्ये छन्दसि मध्यकाले स्तवनप्रणयनं सुप्रचलिता प्रथाऽऽसीदिति विवरणेनानेन स्पष्टीभवति। तदिदं स्तुतिसाहित्यं केवलं लोकभाषास्वेव प्रथितं भवेन्न संस्कृते इति न शक्यते वक्तुम्। एतस्य प्रमापकान्युपर्युद्धृतान्युदाहरणानि सन्त्येव। अन्यदपि सुमहत् स्तुतिसाहित्यमेवंविधमस्मिंश्छन्दसि निबद्धं स्यादेव संस्कृतेऽपीति रुचिकरोऽन्वेषणविणयः। नवीनेषु वार्णिकेतरेषु च्छन्दःसु गीतिविधासु च स्तुतिलेखनं मध्यकाले सुमहति परिमाणेऽभूदिति तु साहित्येतिहासकारा व्याचक्षत एव। कथं संस्कृतेऽन्यानि च्छन्दांसि पर्यगृह्यन्तेत्यस्मिन् विषये बहुभिर्विद्वद्भी रोचकः शोधो विहितोऽस्ति। सम्प्रति स्मरामि यच्चैतन्यसम्प्रदायस्य सुप्रथितेन मूर्धन्यविदुषा मध्यकालीनेन श्रीगदाधरभट्टेनापि संस्कृते यमुनास्तुतिरेवंविधे एव च्छन्दसि (न वै झूलनाच्छन्दसि) निबद्धाऽभूत् - "जयति यमुनाऽभिधा जयति जगदम्बा। पुण्यपयसा न पावयति किल कं वा? सुगमनवसुभगजलदाभजलपूरा। निखिलकलिकलुषौघनिर्दलनशूरा।" इत्यादि। सर्वमिदं नूतनस्य रुचिकरस्य संग्राह्यस्य चानुसन्धानस्य विषय इति प्रसङ्गवशादत्र निवेदितम्।

# रसावबोधचिन्तने धनञ्जयः

डॉ. राघवेन्द्रपाठकः

दशरूपककारानुसारं रसः रसिकैरनुभूयते। रसिकहृदि रत्यादयो भावाः आ जन्मनः तिष्ठन्ति-"विभावानुभावव्यभिचारिसात्त्विकैः काव्योपात्तैरभिनयोपदर्शितैर्वा श्रोतृप्रेक्षकाणा- मन्तर्विपरिवर्तमानो रत्यादिर्वक्ष्यमाणलक्षणः स्थायी स्वादगोचरतां निर्भरानन्दसंविदात्मतामानीयमानो रसः। तेन रसिकाः सामाजिकाः...।[1]"

यदा काव्यमाध्यमेन विभावानुभावसात्त्विकव्यभिचारिणस्साक्षात्क्रियन्ते तदा तैर्दृष्टिपथे मनःपथे वाऽऽगतवद्भिर्विभावानुभावव्यभिचारिभी रसिकचित्तस्थस्थायिभावः परमास्वादकोटिं प्रति नीयते। एष एवास्वाद्यमानो रत्यादिर्रसो भवति-

**विभावैरनुभावैश्च सात्त्विकैर्व्यभिचारिभिः।**
**आनीयमान स्वाद्यत्वं स्थायी भावो रसः स्मृतः॥[2]**

प्रश्नोऽयमुदेति अत्र यद्रसिकाणां काव्येषु नाट्येषु वा रसानुभूतिः कथम्? धनञ्जयानुसारं काव्ये प्रयुक्तपदैः प्रतिपाद्याः नायकादयः सामान्यतया उपस्थिता भवन्ति अर्थात् ते रामादिरूपेण न अपितु सामान्यतया धीरोदात्तनायकादिरूपेण एव प्रतीयन्ते-

**धीरोदात्ताद्यवस्थानां रामादिः प्रतिपादकः।**
**विभावयति रत्यादीन्स्वदन्ते रसिकस्य ते॥[3]**

काव्यनिविष्टपदैः समुपस्थापिताः अभीष्टगुणोपेताः एते नायकादयः सहृदयचित्ते प्रत्यक्षत्वेन भासन्ते। इत्थं काव्यस्य अतिशयोक्तिरूपव्यापारद्वारा विशिष्टस्वरूपशालिनः लौकिकरामादयः काव्यनाट्येषु विभावादिपदैः व्यपदिश्यन्ते। वस्तुतः काव्यचारुत्वबलेन रसिकहृदि प्रकटीकृताः एते रामादय एव पारमार्थिकतया आलम्बनविभावाः भवन्ति। बाह्यरामादीनाम् आलम्बनतया आवश्यकता नास्ति-

"अमीषां चानपेक्षितबाह्यसत्त्वानां शब्दोपधानादेवासादिततद्भावानां सामान्यात्मनां स्वस्वसम्बन्धित्वेन विभावितानां साक्षाद्भावकचेतसि विपरिवर्तमानानामालम्बनादिभाव इति न वस्तुशून्यता। तदुक्तं भर्तृहरिणा-

---

1. दशरूपकम्, 4/1
2. तत्रैव, 4/1
3. तत्रैव, 4/40, 41

**शब्दोपहितरूपांस्तान्बुद्धेर्विषयतां गतान्।**
**प्रत्यक्षमिव कंसादीन्साधनत्वेन मन्यते।। इति।**[4]

रसिकाः जानन्ति यदमी चेष्टाभावादयः रत्यादीन् विना न भवन्ति। अतः विभावादीनां ज्ञानेन लक्षणया रत्यादीनां स्थायिभावानां प्रतीतिर्जायते-

''लोके तथाविधचेष्टायुक्तस्त्रीपुंसादिषु रत्याद्यविनाभावदर्शनादिहापि तथोपनिबन्धे सति रत्याद्यविनाभूतचेष्टादिप्रतिपादकशब्दश्रवणादभिधेयाऽविनाभावेन लाक्षणिकी रत्यादिप्रतीतिः।''[5]

तत्त्वतः धनञ्जयः कुमारिलभट्टानुयायी। कुमारिलभट्टानुसारं लक्षणा भवति अभिधेयाविनाभूतप्रतीतिरिति। प्रथमतः रत्यादिभिः समुत्पद्यमानाभिः चेष्टादिभिः सम्पृक्तान् स्त्रीपुरुषान् दृष्ट्वा ते रसिकाः एवंभूतमविनाभावसम्बन्धमवगच्छन्ति यदेते चेष्टादयः रत्यादीन् विना न भवन्ति। अनन्तरं रत्यादीनामविनाभाविनां चेष्टादीनां वाचकान् शब्दान् श्रुत्वा अर्थावगमनं पूर्वदृष्ट्ञ्चाविनाभावसम्बन्धं संस्मृत्य च रसिकाः रत्यादीन् समनुभवन्ति। अमी रत्यादयः भावाः व्यञ्जनायाः विषयाः न। यथा लौकिकवाक्येषु 'गामभ्याज' इत्यादौ श्रूयमाणक्रियासु क्वचिच्च 'द्वारं द्वारं' पिधेहीत्यश्रूयमाणक्रियासु स्वशब्दस्य ग्रहणादथ वाऽग्रहणात् प्रकरणादिवशाद् बुद्धिसन्निवेशिनी क्रियैव कारकैरन्विता वाक्यार्थः तथैव काव्येष्वपि क्वचित् 'प्रीत्यै नवोढा प्रिया' इत्यादौ, क्वचिच्च प्रकरणवशादविनाभावाद्वा नियतविभावानुभावोपस्थापनद्वारा रतिरूपोऽर्थः स्वशब्देनानुक्तोऽपि भावकचेतसि प्रतीयते। एवंरीत्या परिज्ञातः स्थायिभावः व्यञ्जनासदृश्याः कल्पितशक्तेः विषयोऽभूत्वा काव्यस्य वास्तविको वाक्यार्थ एव-

**वाच्या प्रकरणादिभ्यो बुद्धिस्था वा यथा क्रिया।**
**वाक्यार्थः कारकैर्युक्ता स्थायी भावस्तथेतरैः।।**[6]

धनिकोऽत्र स्पष्टीकर्तुमिच्छति यत् वक्तुः विवक्षितार्थ एव तात्पर्यार्थः-

**प्रतिपाद्यस्य विश्रान्तिरपेक्षापूरणाद्यदि।**
**वक्तुर्विवक्षिताप्राप्तेरविश्रान्तिर्न वा कथम्।।**
**पौरुषेयस्य वाक्यस्य विवक्षापरतन्त्रता।**
**वक्त्रभिप्रेततात्पर्यमतः काव्यस्य युज्यते।।**[7]

सः कथयति, श्रोतुराकांक्षापूर्तितः तात्पर्यं परिसमाप्तं न भवति। तथ्यमिदमेव यत् वक्ता यदा किमपि वक्तुमिच्छति तदेव वाक्यप्रयोगं करोति अतः वाक्यं वक्तुः विवक्षाधीनं भवति, परिणामतो विवक्षितार्थ एव तात्पर्यार्थोऽपि। काव्यस्थवाक्येषु अयमेव नियमः। काव्यस्य तात्पर्यार्थोऽपि वक्तुः

---

4. तत्रैव, 4/2, वृत्तिभागः।
5. तत्रैव, 4/37, वृत्तिभागः।
6. तत्रैव, 4/37
7. तत्रैव, 4/37, वृत्तिभागः

कवेर्वा अभिप्रेतार्थः एव। एवं रसादयः तात्पर्यार्थाः एव न तु व्यंग्यार्थाः। संक्षेपतः विभावानुभावसञ्चारिसञ्ज्ञितैः चन्द्ररोमाञ्चनिर्वेदादिपदार्थैः भावितस्य रत्यादिस्थायिभावस्य यदास्वादनं क्रियते तदेव रसः-

**पदार्थैरिन्दुनिर्वेदरोमाञ्चादिस्वरूपकैः ।**
**काव्याद्विभावसञ्चार्यनुभावप्रख्यतां गतः।।**
**भावितः स्वदते स्थायी रसः स परिकीर्तितः।[8]**

अत्र एका शंका बुद्धिमनुच्छादयति यत् यदि काव्ये रामादिसञ्ज्ञाः व्यक्तिविशेषाणां संकेतिकाः न अपितु विशिष्टगुणगणसामान्यानां जनानामेव बोधिकास्तर्हि रामादीनामेव सञ्ज्ञानां ग्रहणं किमर्थम्? समाधानाय धनञ्जयः कथयति यत् यथा बालकः कृत्रिमैः मृन्मयैः द्विरदादिभिः क्रीडन् स्वकीयमुत्साहमास्वादयति तथैव श्रोतृवर्गोऽर्जुनादिपात्रद्वारा आस्वदते-

**क्रीडतां मृन्मयैर्यद्वद्बालानां द्विरदादिभिः।।**
**स्वोत्साहः स्वदते तद्वच्छ्रोतृणामर्जुनादिभिः।।[9]**

अत्र 'स्वोत्साहं स्वदते' इति विशेषतया ध्यातव्यं वर्तते। तथ्यतः सहृदयानां कृते आलम्बनविभावतया रामादीनां लौकिकरूपाणां न कश्चन उपयोगः। पदमाध्यमेन उपस्थापितानि रामादीनां बुद्धिगतरूपाणि एव परमार्थतः आलम्बनविभावाः भवन्ति। काव्ये वाचकानां वाच्यार्थभूतैः विभावादिभिः लक्षणया रत्यादिस्थायिभावस्य प्रतीतिः तात्पर्यावृत्या भवति। रत्यादिस्थायिभावः काव्यार्थ एव-

**तत्र विभावादयः पदार्थस्थानीयास्तत्संसृष्टो रत्यादिर्वाक्यार्थः।[10]**

भाट्टमीमांसकानुसारमपि यथा वाक्यार्थः तात्पर्यया ज्ञायते तथा विभावादिभिः संसृष्टो रत्यादिस्थायिभावोऽपि तात्पर्यया एव प्रतीयते। अनेन काव्यार्थेन सहृदयानां चित्तं तन्मयत्वं प्राप्नोति। तेन काव्यार्थेन तदेकनिष्ठभावेन च चित्तस्य विकासविस्तारविक्षेपाख्येषु विकारेषु रसानुगुणमेकेन विकारेण अलौकिकानन्दः जायते-

**स्वादः काव्यार्थसम्भेदादात्मानन्दसमुद्भवः।**
**विकासविस्तरक्षोभविक्षेपैः स चतुर्विधः।।[11]**

एवंप्रकारेण काव्यं रसादीनां भावकं रसादयः भाव्याश्च-''काव्यं हि भावकं भाव्याः रसादयः''। अन्वयव्यतिरेकाभ्यां सम्बन्धोऽयमङ्गीक्रियते। यत्र काव्यरसस्य चर्वणा तत्र काव्यशब्दः काव्यशब्दः नितरां राजते, यत्र च काव्यशब्दः न भवति तत्र काव्यरसचर्वणस्यापि अभावः-'अन्वयव्यतिरेकाभ्यामिहं

---

8. तत्रैव, 4/46
9. तत्रैव, 4/41
10. तत्रैव, 4/37, वृत्तिभागः
11. तत्रैव, 4/43

तथाऽवगमात्।[12] अयं रसानन्दः बहिर्भागात् नागच्छति अपितु रसिकगणः दुष्यन्तादीनां वर्णनद्वारा स्वीयचित्तस्थरत्यादिभावानामास्वादनं करोति। यथा बालः कृत्रिममृन्मयद्विरदादिभिः स्वोत्साहमनुभवति तथा च आनन्दीभवति तथैव रसिकवर्ती रत्यादिस्थायिभाव एव आस्वाद्यः सन् रसपदवाच्यः-

**रसः स एव स्वाद्यत्वाद्रसिकस्यैव वर्तनात्।**
**नानुकार्यस्य वृत्तत्वात्काव्यस्यातत्परत्वतः॥**[13]

अत्र वक्तुं शक्यते यत् स्थायिभावरसयोः न कश्चन मौलिकः भेदः। स्थायिनः प्रकर्ष एव रसः-''लक्षणैक्यं विभावैक्याभेदाद्रसभावयोः''।

**पूर्वाचार्याः धनञ्जयश्च-**

पूर्वाचार्याणां भट्टलोल्लट-शङ्कुक-भट्टनायक-अभिनवगुप्तप्रमुखाणां मतानां दर्शनानन्तरं यदा धनञ्जयमतं परिशील्यते तदा अस्य मतस्य विलक्षणता स्वयमेव स्फुटीभवति। प्राचीनानां मतैः सह अस्य मतस्य आंशिकसमानता यद्यपि बुद्धेः गोचरत्वमायाति तथापि मतमिदं पूर्णतया भिन्नम्। सर्वथा विप्रत्तिपत्तिरहितमेतद्यत् दशरूपके रससम्बन्धि मतं भट्टलोल्लटप्रभृतीनां सम्मिश्रणमात्रं न।

धनञ्जयः भट्टलोल्लटस्य मतमिव स्थायिनः संपुष्टिं रस एवाङ्गीकरोति किन्तु उत्पाद्योत्पादकभावं तथा च पूर्वव्याख्याकारानुसारं अनुकार्ये रसस्थितिं भट्टलोल्लट इव नानुमोदयति। आमेतदवश्यमस्ति यत् धनञ्जयेन रसस्य स्थितिः अनुकर्तरि निस्संदेहेन स्वीकृता-''काव्यार्थभावनास्वादो नर्तकस्य न वार्यते''[14]।

शङ्कुकस्य चित्रतुरगन्यायः धनञ्जयस्य मृन्मयहस्तिदृष्टान्तश्च न समानः। कारणम्, चित्रतुरगन्यायः बोधयति यत् राममभिनयन्तं नटं सामाजिकः रामं कथमवगच्छति। मृन्मयहस्तिदृष्टान्तः प्रश्नस्यास्य उत्तरं प्रयच्छति यत् यदि सीतारामादयः केवलानामुदात्तादि- गुणयुक्तानां स्त्रीपुरुषाणां संकेतकाः तर्हि सीतारामादीनां वर्णनं किमर्थं क्रियते।

आपाततो धनञ्जयस्य मतं केषुचिदंशेषु भट्टनायकमतमिव प्रतीयते, किन्तु वस्तुतः तादात्म्यमत्रापि नास्ति। प्रथमतः धनञ्जयः भावकत्वव्यापारस्य पृक्थक्तया कल्पनां न करोति। केवलमेतदेव कथयति-''काव्यं हि भावकं भाव्याः रसादयः'' इति, किन्तु अत्र काव्यं तात्पर्यावृत्या रसादीनां भावकं भावति, न तु भावकत्वव्यापारेण। किञ्च भट्टनायकस्य भावकत्वं साधारणीकरणम्, दशरूपके न तथा। एतदतिरिच्य द्वयोः रसानुभूतिप्रक्रियायामपि भेदो वर्तते। भट्टनायकानुसारं भोजकत्वव्यापारेण सत्त्वोद्रेकवशात् आनन्दमयी रसानुभूतिः जायते। धनञ्जयस्य मतानुसारं काव्यार्थेन सहृदयचित्तस्य

---

12. तत्रैव, 4/37, वृत्तिभागः।
13. तत्रैव, 4/37
14. तत्रैव, 4/42
15. तत्रैव, 1/5

तन्मयीभवनादात्मानन्दानुभूतिः। मतद्वये अत्र न केवलं शब्दानां भेदोऽपितु धारणायाः भेदः स्फुटतया दरीदृश्यते।

धनञ्जयस्य रससम्बन्धिमते रत्यादिभावस्य सामाजिकचित्ते पूर्वविद्यमानत्वं, लौकिककारणादीनां काव्यद्वारा विभावादिरूपतया परिणतत्वम्, विभावादिभिः संसृष्टेन रत्यादिस्थायिभावेन सह रसिकचित्तस्य तन्मयत्वञ्चेत्यादीनि तथ्यानि अभिनवगुप्तस्य मतेन बहुलतया समानतां संरक्षन्ति। किन्तु कथनस्यास्य अभिप्रायोऽयं नास्ति यत् द्वयोः आचार्ययोः मते कश्चन मौलिकभेदः नास्ति। दशरूपके रसकाव्ययोः यो भाव्यभावकसम्बन्धो वर्तते सोऽभिनवगुप्तस्य व्यंग्यव्यंञ्जकभावात् सर्वथा भिन्नोऽस्ति। अभिनवगुप्ताभिमतं साधारणीकरणं प्रमातुरपरिमितत्वञ्च न कुत्रापि संदृश्यते दशरूपके। दशरूपके पूर्वमीमांसामधिकृत्य परिकल्पितस्य रससिद्धान्तस्य शैवागमभित्तौ स्थापितेन अभिनवगुप्तस्य रससिद्धान्तेन बाह्यसाम्यमेव इति।

प्रायः समवर्तिनोः आचार्ययोः अथ वा किञ्चिज्ज्येष्ठस्य धनञ्जयस्य अभिनवगुप्तेन सह न कश्चन सम्बन्धः। अन्यथा अभिनवगुप्तमते धनञ्जयकृतस्य प्रौढसैद्धान्तिकमतस्य दर्शनमवश्यम्भावि आसीत्। द्वाभ्यामेव आचार्याभ्यां काव्यवस्तुनः सामान्यप्रतीतेः रसिकरसास्वादनस्य च यथामति सर्वथा स्तुत्यः मार्गः प्रस्तुतः। यद्यपि शैवप्रत्यभिज्ञाया अद्वैतवादमाश्रितस्य अभिनवगुप्तकृतसिद्धान्तस्य अन्यमतेन तुलनमसाध्यम्, संस्कृतकाव्यशास्त्रस्योपरि तन्मतस्य शासनमेकच्छत्रं वर्तते तथापि आचार्यप्रवरस्य शैल्याः निबिड़ता सहृदयधुरिणेष्वपि स्वेदं जनयति। तद्विवरीतं धनञ्जयमतमत्यन्तं सहजं प्रसादगुणोपेतञ्चास्ति, अत एव तस्यानुयायिन आचार्या अपि न न्यूनाः। एतदनुसरणं यद्यपि रसास्वादनप्रक्रियायाः न अपितु रसप्रक्रियाया एव सर्वत्र प्राप्यते। विद्यानाथशारदातनयसिंहभूपालकुमारस्वामिअल्लराजभानुदत्तरूप-गोस्वामिनृसिंहकवि- विश्वनाथप्रभृतीनामाचार्याणामुपरि धनञ्जयस्य प्रभावः संदृश्यत एव।

वस्तुतः परवर्तिभिराचार्यैः रसास्वादनप्रक्रियायाः विश्लेषणमपि न कृतम्। विश्वनाथं विहायोपर्युल्लिखितैराचार्यैः रसप्रक्रियाप्रसंगे धनञ्जयमतस्य बहुषु अंशेषु अनुसरणं तथा रसास्वादनप्रक्रियाविषये अकथनञ्चेत्येतत्तथ्यद्वयं धनञ्जयमतं प्रति मौनं स्वीकरणमेव प्रतीयते। किमर्थं न भवेत्तथा। स धनञ्जया इमे आचार्याः विशुद्धरसवादिनः। एतत्कृते रसो न ध्वनिभेदः। एतदाचार्याणां पुरतः रसं ध्वनिभेदरूपेण स्थापयितुं समस्या नासीत्। यदा कदा तु एवं प्रतीयते यत् परममाहेश्वरः रसस्य व्यक्तीकरणाय एव कठिनः सञ्जातः। एतदनुयायिनः सर्वे आचार्याः रसमभिव्यञ्जयितुमेव सहृदयाः भवन्ति। शब्दस्यास्य एवंप्रकारकः मोहः वर्तते यत् हेमचन्द्रः भरतरससूत्रे संयोग इति पदस्य स्थाने व्यक्त इति विलिख्य आत्मपरामर्शमनुभवति। अस्तु, सैद्धान्तिकमतानां विशिष्टं महत्त्वं भवति तथा समस्तभावानां परिवाहकशब्दानाञ्चापि विलक्षणं माहात्म्यम्। न कस्यापि विरोधोऽत्र इष्टः। धनञ्जये विशुद्धरसवादिषु तदनुयायिषु च न कश्चन विशिष्टशाब्दिकः आग्रहः वर्तते। वस्तुतः एते नाट्यशास्त्रिणः। नाट्यं भवति सर्वोपदेशकं सार्ववर्णिकञ्च। अत एव विषयानुगुणमेषां विवेचनशैली अपि सहजा सुगमा च। आचार्यः धनञ्जयः स्वारस्यमेतदेव ग्रन्थारम्भे परिप्रकाशयति-

**व्याकीर्णे मन्दबुद्धीनां जायते मतिविभ्रमः।**
**तस्यार्थस्तत्पदैस्तेन संक्षिप्य क्रियतेऽञ्जसा।।**[15] इति।

संदर्भग्रन्थाः –


1. दशरूपकः–व्या.–भोलाशङ्करव्यासः, चोखम्बाविद्याभवनम् वाराणसी, 1984
2. नाट्यशास्त्रम्–सं.–रविशङ्करनागरः, परिमलप्रकाशनम्, दिल्ली, 1981
3. काव्यानुशासनम्–सं.–रसिकलालपारिखः, श्रीमहावीरजैनविद्यालयः, बम्बई, 1938
4. नञ्जराजयशोभूषणम्–सं.–कृष्णमाचार्यः, प्राच्यविद्याप्रतिष्ठानम्, बडौदा, 1930
5. प्रतापरूद्रयशोभूषणम्–सं.–वी. राघवन्, संस्कृतविद्यासमिति, मद्रास, 1979
6. भावप्रकाशनम्–व्या.–मदनमोहन–अग्रवालः, चौखम्बांसुरभारतीप्रकाशनम्, वाराणसी, 1983
7. भक्तिरसामृतसिन्धुः–सं–विश्वेश्वरः, हिन्दी विभागः, दिल्लीविश्वविद्यालय, 1996
8. एकावली–व्या.–भृगुनाथपाण्डेयः, राष्ट्रियसंस्कृतसंस्थानम्, दिल्ली, 1996
9. रसरत्नप्रदीपिका–सं.–आर.एन. दाण्डेकर, विद्याभवनम्, मुम्बई, 1945
10. रसतरङ्गिणी–अनु.–गोपालदत्तजोशी, मुंशीराममनोहरलालप्रकाशनम्, दिल्ली, 1974
11. साहित्यदर्पणः–व्या.– सत्यव्रतसिंहः, चौखम्भाविद्याभवनम्, वाराणसी 1992

# शिशुपालवधमहाकाव्ये सांख्ययोगतत्त्वविमर्शः

डॉ. सुमनकुमारझा

रजोजुषे जन्मनि सत्त्ववृत्तये स्थितौ प्रजानां प्रलये तमः स्पृशे।
अजाय सर्गस्थितिनाशहेतवे त्रयीमयाय त्रिगुणात्मने नमः।।[1]

जयन्ति ते सुकृतिनो रससिद्धाः कवीश्वराः।
नास्ति येषां यशः काये जरामरणजं भयम्।।[2]

रम्यं जुगुप्सितमुदारमथापि नीचम्, उग्रं प्रसादि गहनं विकृतं च वस्तु।
यद्वाऽप्यवस्तु कविभावकभावनीयं, तन्नास्ति यन्न रसभावमुपैति लोके।।[3]

पुरा अद्यपर्यन्तं संस्कृतसाहित्येतिहासे क्षेत्रे वा ये-ये महाकवयोऽभवन् ते सर्वे स्व स्वालौकिकप्रतिभया अप्रतिमपाण्डित्येन च स्व-स्व क्षेत्रे महान्तोऽभवन्। तेषु महाकविषु महाकविमाघोऽन्यतमो विद्यते। अनेन महाकविना विरचितं शिशुपालवधाख्यं महाकाव्यं न केवलं समग्रसंस्कृतसाहित्ये एव अपितु सम्पूर्णसंस्कृतवाङ्मये विशिष्टं स्थानं विभर्ति इति निश्चप्रचम्। महापण्डितः माघः न केवलं महाकवित्वेनापितु शास्त्रकवित्वेनास्ति सुप्रसिद्धः। माघे सकलशास्त्राणां परिनिष्ठितज्ञानं परिलक्ष्यते। माघस्य पाण्डित्यमभिलक्ष्येवोच्यते **धनपालेन तिलकमञ्जर्याम्**-

**माघेन विघ्नितोत्साहा नोत्सहन्ते पदक्रमे।**
**स्मरन्ति भारवेरेव कवयः कपयो यथा।।**[4]

संस्कृतमहाकवीनां या दृष्टिः काव्येषु विलसति सा नैकपक्षीया, अपितु परमोदात्ता, बहूद्देश्यसंवलिता नानाऽऽयामोपशोभिता च। अतएव संस्कृतकाव्येषु न केवलं मानवजीवनं विषयीकृतमपितु चराचरात्मकं सम्पूर्ण जगद् एव यथारुचि निरूपितम्। यथा चोच्यते-

---

1 कादम्बरीगद्यकाव्यस्य मङ्गलपद्यम्।

2 भर्तृहरि- नीतिष्ठातकम्

3 दशरूपकम् -4/85

4 थ्तलकमञ्जरी गद्यकाव्यम्, पद्य सं.-28

**अपारे काव्यसंसारे कविरेव प्रजापतिः।**
**यथास्मै रोचते विश्वं तथेदं परिवर्तते।।**[5]

संस्कृतसाहित्ये मानवजीवनोत्कर्षाय विविध-विधानां शास्त्रीयतत्त्वानां प्रतिपादनं सरल-सहज-व्यावहारिकरीत्या च क्रियते कविभिः। तत्रापि उपक्रमेऽस्मिन् संस्कृतमहाकाव्यानां योगदानं सर्वथा श्लाघनीयं, महत्वपूर्णञ्चेत्यत्र नास्ति संशीतिलेशः। संस्कृतमहाकाव्येषु प्रायशः सर्वाणि शास्त्राणि, सर्वाः विद्या कलाश्च निरूप्यन्ते महाकविभिः। कान्तासम्मिततयोपदेशसमन्वितेषु काव्येषु शास्त्राणामप्युपयोगः क्रियते। यथा-

**स्वादुकाव्यरसोन्मिश्रं शास्त्रमप्युपयुज्यते।**
**प्रथमालीढमधवः पिबन्ति कटुभेषजम्।।**[6]

वस्तुतः सहितस्य भाव इति साहित्यम्। गुणवचनब्राह्मणादिभ्यः पा. सू. 5-1-124 इति ष्यञ्। सहभावश्चाष्टाशप्रस्थानभिन्नानां विद्यानाम्[7], चतुष्षष्टिकलानाञ्च। एवं हि युक्तमत्र साहित्यपदाभिध नमिति मन्यामहे। अथवा सहितस्य कर्म साहित्यम्, यस्मादत्र परीक्ष्यमाणे कविकर्मणि सर्वा अपि विद्याः काव्याङ्गतया परिगृह्यन्ते। यथा चोक्तं भामहाचार्येण-

**न स शब्दो न तद्वाच्यं न स न्यायो न सा कला।**
**जायते यन्न काव्याङ्गमहो भारो महान् कवेः।।**[8]

भरतमुनिनाऽपि उच्यते - **न तच्छास्त्रं न तच्छिल्पं न सा विद्या न सा कला।**
**नासौ योगो न तत्कर्म नाट्येऽस्मिन् यन्न दृश्यते।।**[9]

इत्थं सहृदयहृदयहारिभिः सुमधुरवर्णनैः सकलविद्याकलासारपरिपूरितैः सर्वशास्त्रसाररूपं समपद्यते साहित्यम्।

अतएव साहित्यशास्त्रप्रणेतार आचार्या आरम्भादेव काव्यनिर्माणे असाधारणतया सकलाः कलाः, निखिलाश्च विद्याः साधनीभूताः सन्तीति प्रतिपादयन्ति, कविभिश्च ताः सर्वाः विद्याः, तानि सर्वाणि शास्त्राणि अवश्यमेव ज्ञातव्यानि इत्यपि निरूपयन्ति। तथा हि-

---

5 ध्वन्यालोकः- तृतीयोद्योतः, पृ0/530

6 काव्यालङ्कारः- 5/3

7 ऋगादिचत्वारोवेदाः, शिक्षादिषडङ्गानि, मीमांसा, न्यायः, धर्मशास्त्रम्, पुराणम्, आयुर्वेदः, धनुर्वेदः, गन्ध र्ववेदः, अर्थवेद इत्यष्टादशविद्याः। इहैव चतसृणां चतुर्दशानामपि रूढानां विद्यानामन्तर्भावो भवति। काव्यमीमांसा-द्वितीयोऽध्यायः।

8 काव्यालङ्कारः- 5/4

9 नाट्यशास्त्रम्- 1/116

**शब्दाश्छन्दोऽभिधानार्था इतिहासाश्रयाः कथाः।**
**लोको युक्तिः कलाश्चेति मन्तव्याः काव्यगैरमी॥[10]**

**नैसर्गिकी च प्रतिभा श्रुतं च बहुनिर्मलम्।**
**अमन्दश्चाभियोगोऽस्याः कारणं काव्यसम्पदः॥[11]**

**लोको विद्या प्रकीर्णञ्च काव्याङ्गानि।[12]**
**शक्तिर्निपुणता लोकशास्त्रकाव्याद्यवेक्षणात्।**
**काव्यज्ञशिक्षयाभ्यास इति हेतुस्तदुद्भवे॥[13]**

एवं हि काव्यनिर्माणे सकलशास्त्रादिज्ञानपेक्षितम्। यथा चोच्यते- **सकलविद्यास्थानैकायतनं पञ्चदशं काव्यं विद्यास्थानम्। गद्यपद्यमयत्वात् कविधर्मत्वात् हितोपदेशकत्वाच्च तद्धि शास्त्राण्यनुधधावति।** [14]

तत्र कविः त्रिधा इति कथयति राजशेखरः- **शास्त्रकविः काव्यकविरुभयकविश्च। यच्छास्त्रकविः काव्ये रससम्पदं विच्छिनत्ति। यत्काव्यकविः शास्त्रे तर्ककर्कशमप्यर्थमुक्तिवैचित्र्येण श्लथयति। उभयकविस्तूभयोरपि वरीयान्यद्युभयत्र परं प्रवीणः स्यात्। तस्मात्तुल्यप्रभावावेव शास्त्रकाव्यकवी। उपकार्योपकारकभावं तु मिथः शास्त्रकाव्यकव्योरनुमन्यामहे यच्छास्त्रसंस्कारः काव्यमनुगृह्णाति शास्त्रैकप्रवणता तु निगृह्णाति। काव्यसंस्कारोऽपि शास्त्रवाक्यपाकमनुरुणद्धि काव्यैकप्रवणता तु विरुणद्धि। तत्र त्रिधा शास्त्रकविः। यः शास्त्रं विधत्ते, यश्च शास्त्रे काव्यं संविधत्ते, योऽपि काव्ये शास्त्रार्थं निधत्ते।'**[15]

आचार्यराजशेखरस्यानेन समीक्षणेन निश्चीयते यद् माघः काव्यकविः। माघे सर्वशास्त्राणां परिनिष्ठितज्ञानमासीत्। व्याकरणशास्त्रस्य प्रकाण्डविद्वानोऽयं जनः। अतएव व्याकरणशास्त्रविषयकं पाण्डित्यं महाकाव्येऽस्मिन् प्रतिपदं प्रतिवाक्यञ्च परिलक्ष्यते। शिशुपालवधे वेद-वेदाङ्ग-उपनिषद्-धर्मशास्त्र-पौरोहित्य-कर्मकाण्ड-मंत्र-तंत्र-योगशास्त्र-पुराण-इतिहास-छन्द-ज्योतिष-कामशास्त्र-आयुर्वेद-सङ्गीत- सामुद्रिकशास्त्र-राजनीतिशास्त्र-हयशास्त्र-गजशास्त्रादिविद्यानां वर्णनं चित्रणञ्च प्राप्यते। एतासां विद्यानां प्रचुरप्रयोगोपलभ्यते महाकाव्येऽस्मिन्।

10 काव्यालङ्कारः-1/9
11 काव्यादर्शः- 1/103
12 काव्यालङ्कारसूत्राणि- 1/3/1
13 काव्यप्रकाशः- 1/3
14 काव्यमीमांसा- पञ्चमोऽध्यायः
15 तत्रैव

महाकविमाघः भारतीयदर्शनशास्त्रस्य निष्णातः विद्वान् इति शिशुपालवधमहाकाव्यस्यानुशीलनेन सुतरां ज्ञायते। मानवजीवनस्य दर्शनेन सह घनिष्ठः सम्बन्धः। परमतत्त्वस्य सैद्धान्तिकं रूपं दर्शनशास्त्रेषु अवाप्यते। व्यावहारिकं हि रूपं स्वजीवने एवानुभूयते अस्माभिः। दुःखस्य आत्यन्तिकनाशः, अथवा जन्ममरणबन्धनाभ्यां सर्वथामुक्तिरेव सर्वेषां चरमलक्ष्यम्। बृहदाकारत्वात् महाकाव्येषु मानवजीवनस्य सर्वविधपक्षाणां व्यापकं चित्रणं जायते। महाकाव्यस्य रचनापटं बृहद् भवति, अतः कविभिः मानवजीवनोपयोगिसमस्तक्रियाकलापेषु या दार्शनिकधारणा विद्यते सा तत्रोपनिबध्यते। महाकविमाघः महाकाव्येऽस्मिन् प्रायशः सर्वाणि दर्शनानि तत्तद्प्रसङ्गेषु उपस्थापयति। तेन प्रकाश्यन्ते च विविध दार्शनिकतत्त्वानि।

भारतीयषट्दर्शनेषु सांख्ययोगदर्शनयोर्महत्वं विदितमेव विदुषाम्। अतः सांख्ययोगदर्शनसम्बद्धाः ये सन्दर्भाः शिशुपालवधे निरूपितास्सन्ति, ते अत्रोपस्थाप्यन्ते ।

'सांख्यस्य' सम्बन्धः तत्त्वसंख्यया विद्यते। सांख्यदर्शने पञ्चविंशतितत्त्वानि गण्यन्ते। संख्यायन्ते गण्यन्ते येन तत् सांख्यम्, अपि च –'प्रकृतिपुरुषान्यताख्यातिरूपोऽवबोधो सम्यक् ज्ञायते येन तत् सांख्यम्। इत्थं सांख्यस्य द्विधाऽर्थः क्रियते, संख्या ज्ञानञ्च। तत्त्वज्ञानमिदं प्रकृतिपुरुषयोर्पार्थक्यज्ञानम्, उत् वा शरीर-आत्मनोः, जड-चेतनयोश्च भेदज्ञानमस्ति। सम्यक्ज्ञानमिदं सांख्याधिकमान्योऽर्थः। तत्त्वान्येतानि सङ्केतयति महाकविमाघः शिशुपालवधे, तद्यथा- तत्र प्रथमे सर्गे महर्षिनारदः भगवन्तं श्रीकृष्णं प्रति कथयति-

**इति ब्रुवन्तं तमुवाच स व्रती न वाच्यमित्थं पुरुषोत्तम! त्वया।**
**त्वमेव साक्षात्करणीय इत्यतः किमस्ति कार्यं गुरुयोगिनामपि॥**[16]

हे पुरुषोत्तम! भवता एवं न वाच्यम्, त्रिकालदर्शिनोयोगिनोऽपि समाधौ भवन्तमेव साक्षात्कुर्वन्ति। अतो भवद्दर्शनादृते मदागमनस्य नान्यत् किञ्चित् प्रयोजनं विद्यते। अत्र च कथयति बल्लभदेवः -**यतो योगिभिः सनकसनन्दनसनातनसनत्कुमारकपिलादिभिरपि त्वमेव साक्षात्करणीयः।** [17] यदुक्तं योगिनामपि त्वमेव साक्षात्करणीय इति तदेव द्रढयति-

**उदीर्णरागप्रतिरोधकं.................अग्रभूमिर्निरपायसंश्रया॥** [18]

यथा कस्यचित्कुतश्चित्संकटान्निर्गतस्य केनचित्कान्तारेण गतस्य सौभाग्यात् किञ्चिन्निर्बाध स्थानप्राप्तिरभयाय कल्पते तथैव विषयाभिलाषप्रतिबन्धकैराक्रान्तम् अनभ्यस्तत्वेन जनैरतिदुर्गमं मोक्षपथं कामयमानः पुरुषस्त्वामेव प्रथममाप्नोति, ततश्च 'न स पुनरावर्तते। 'सोऽहम्' इत्यादिश्रुतेस्तत्प्राप्तिरेव

---

16 शिशु.महाकाव्यम्- 1/31

17 संदेहविषोषधिटीका-1/31

18 शिशु.महाकाव्यम्- 1/32

मोक्षत्वादिति भावः। तस्मान्मुमुक्षूणामपि त्वमेव साक्षात्करणीय इति सिद्धम्। **''तमेव विदित्वाऽतिमृत्युतेति नान्यः पन्था विद्यतेऽयनाय'' इति श्रुतेः।** इति वेदान्तदर्शनाभिमतम्। **'भगवत्सायुज्यं हि मोक्षः। रागे हि सति कुतो मोक्षः। मोक्षस्य पन्था मोक्षपथः।'** इति बल्लभदेवः।

इदानीं सांख्यमतेन ईश्वरस्वरूपं प्रतिपादयति। यथा प्रकृतिविविक्तपुरुषसाक्षात्कारान्मोक्षप्राप्तिर्जायते, स भवानेवास्ति- यथा -

**उदासितारं निगृहीतमानसैर्गृहीतमध्यात्मदृशा कथञ्चन।**
**बहिर्विकारं प्रकृतेः पृथग्विदुः पुरातनं त्वां पुरुषं पुराविदः॥**[19]

अर्थात् मनः संयम्य योगिनोऽन्तर्दृष्ट्या अध्यात्मदृष्ट्या वा कथञ्चिद् साक्षात् कुर्वन्ति, त्वं सर्वतः उदासीनः सांख्यशास्त्रप्रतिपादितमहदादिविकारेभ्यो भिन्नः सत्त्व-रजस्-तमस्-त्रैगुण्यात्मनो मूलकारणात् प्रकृतेः पृथक्स्थितः पुरातनः पुरुषश्चासि इति ब्रह्मविदो जनास्त्वां विदन्ति। पद्येऽस्मिन् माघेन 'पुराविदः' 'उदासितारं' 'बहिर्विकारं' 'प्रकृतेः पृथग्विदुः' इत्यादयः शब्दाः प्रयुज्यन्ते। महाकविमाघस्याशयमित्थं विवृणोति **प्रशस्तटीकाकारमल्लिनाथः- पुराविदः पूर्वज्ञाः कपिलादयः' इत्यनेनात्र पुराविद् शब्दः महर्षिकपिलादिभ्यः सांख्यशास्त्रप्रणेतृभ्यः प्रयुक्तः।** केन रूपेण त्वां गृहीतमित्यत आह- उदासितारमुदासीनम्। प्रकृतौ स्वार्थप्रवृत्तायमपि स्वयमप्राकृतत्वादस्पृष्टमित्यर्थः। तथ्यस्यास्य पुष्ट्यर्थ सांख्यकारिकाग्रन्थस्येयं कारिका उपस्थाप्यते- यथा-

**तस्माच्च विपर्यात्सिद्धं साक्षित्वमस्य पुरुषस्य।**
**कैवल्यं माध्यस्थ्यं द्रष्टृत्वमकर्तृभावश्च॥**[20]

महदादिविकारेभ्यो यः पृथक् प्रतिपादयति - तत्र कथयति आचार्यमल्लिनाथः - विकारेभ्यो बहिः बहिर्विकारम्। महदादिभ्यः पृथगभूतमित्यर्थः। किञ्च प्रकृतेस्त्रैगुण्यात्मनो मूलकारणात्पृथग् भिन्नम्। 'प्रकृतिः पञ्चभूतेषु प्रधाने मूलकारणे' इति। पुरा भवं पुरातनमनादिम्, पुरुषं पुरुषपदवाच्यं विज्ञानघनं विदुर्विदन्ति। यथाहुः -

**मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त।**
**षोडशकस्तु विकारो न प्रकृतिर्न विकृतिः पुरुषः॥**[21]

**तस्मात्त्वमेव साक्षात्करणीय इति सुष्ठूक्तमिति भावः।**

अत्र च कथयति बल्लभदेवः - इदानीं सांख्यदर्शनेन भगवतो निष्क्रियत्वमाह - त्वां पुराविदः सनत्कुमारप्रभृतयश्चिरन्तनाः पुरातनं पुरुषं विदुः। कीदृशं पुरुषमुदासितारं निष्क्रियम्, सांख्या

19 शिशु.महाकाव्यम्- 1/33

20 सांख्यकारिका- का.सं.-19

21 सर्वङ्कषाटीका- (शिशु.महाकाव्यम्) 1/33

हि साक्षिमात्रं पुरुषमेवाहुः। तथा विकारेभ्यो महदादिभ्यो बहिर्बाह्यम्, त्रयोविंशतिविकारविलक्षणमित्यर्थः। तथा प्रकृतेः प्रधानात् पृथगन्यत्, न त्वं प्रकृतिर्नापि विकृतिरित्यर्थः। तदुक्तम् – 'न प्रकृतिर्न विकृतिः पुरुषः' इति। सत्त्वरजस्तमांस्यनुद्भुतपाटवानि स्वकार्यक्षमाणि प्रकृतिशब्देनोच्यन्ते। एतत्तु सर्वं योगशास्त्रादेव सुज्ञानमिह तु परमुक्तिमात्रम्। [22]

अत्र प्रकृतेः निर्विकारावस्था मूलप्रकृतिरिति। प्रकृतेः पृथग्विदुः अतएवास्ति यतः त्रिगुणात्मिकाप्रकृतिरेव जगतः कारणम्। यथा- चोक्तं सांख्यकारिकायाम्-

**त्रिगुणमविवेकि विषयः सामान्यमचेतनं प्रसवधर्मि।**
**व्यक्तं तथा प्रधानं तद्विपरीतस्तथा च पुमान्॥**[23]

उपर्युक्तपद्ये महाकविमाघः सांख्यशास्त्रीयतत्त्वानि निर्दिशति। अवतारवादानुसारं कृष्णं परमात्मरूपमिति बोधयनत्र तं सांख्यपुरुषत्वेन सिद्धयति।

अथ द्वितीयसर्गे माघः प्रतिपादयति – यथा पुरुषः (आत्मा) साक्षीमात्रे फलभाजि भवति, बुद्धिश्च सुखदुःखादीन् भुङ्क्ते। यथा-

**विजयस्त्वयि सेनायाः साक्षिमात्रेऽपदिश्यताम्।**
**फलभाजि समीक्ष्योक्ते बुद्धेर्भोग इवात्मनि॥**[24]

पद्येऽस्मिन् बलरामः कृष्णं प्रति कथयति, यद्- यथा सांख्योक्तफलभोक्ता साक्षिमात्रे आत्मनि बुद्धेः भोगः प्रयुज्यते तथैव सेनायाः कर्त्र्या विजयः साक्षिमात्रे उदासीने एव फलभाजि त्वयि समीक्ष्योक्ते। अत्र चोच्यते **संदेहविषोषधिव्याख्यायाम्** –

'त्वं केवलं वीक्षस्व, यत्तु कर्तव्यं तदखिलं पृतनैव करोति विजयश्च लोके तवैव न तु सेनायाः, तत्फलं च त्वमेव सेवसे न तु चमूः। क्व यथा- समीक्षोक्ते सांख्यशास्त्रनिर्दिष्टे – यथात्मनि साक्षिमात्रे बुद्धेः सम्बन्धी भोगानुभवः संसारापवर्गलक्षणोपदिश्यते। तत्र हीदं दर्शनम्- आत्मा दर्शयिता बुद्धिर्वेद्या, बुद्धिर्बध्यते मुच्यते न किञ्चिदुपभुङ्क्ते। अथोच्यते- पुरुषो बद्धः पुरुषो मुक्त आत्मनः सुखमात्मनो दुःखमिति।[25]

सांख्योक्ते – 'सांख्य समीक्ष्यम्' इति त्रिकाण्डः इति मल्लिनाथः। आत्मनि बुद्धेर्महत्तत्त्वस्य मूलप्रकृतेः प्रथमविकारस्य कर्त्र्या भोगः सुखदुःखानुभव इवापदिश्यतां व्यवह्रियताम्। भृत्यजयपराजयोः

---

22 संदेहविषोषधिटीका-1/33

23 सांख्यकारिका- का.सं.-11

24 शिशु.महाकाव्यम् 2/59

25 संदेहविषोषधिटीका-2/59 पृ.-65

स्वामिगम्यत्वादिति भाव:। सांख्या अप्याहु: – 'कर्त्तेव भवत्युदासीन:' इति, 'सर्व प्रत्युपभोगं यस्माद् पुरुषस्य साधयति बुद्धि:' इति च।[26]

अत्र सांख्योक्तकथनेन राजनीतिविषयक तत्त्वानां परिपोषणं जायते। तेन माघ: सांख्यदर्शनस्य ज्ञाता इति प्रमाणयति। सन्दर्भेऽस्मिन् सांख्यकारिकाया: निम्नलिखिता कारिका द्रष्टव्याऽस्ति- यथा-

**तस्मात्तत्संयोगादचेतनं चेतनावदिवलिङ्गम्।**

**तदगुण: कर्तृत्वेऽपि तथा कर्त्तेव भवत्युदासीन:।।**[27]

प्रकृतिपुरुषयोर्ज्ञानेनेव मोक्षप्राप्ति: सम्भवा, नान्यथा। तथ्यमिदं रैवतकपर्वतचित्रणप्रसङ्गेन प्रतिपादयति महाकविमाघ:-

**मैत्र्यादिचित्तपरिकर्मविदो विधाय, क्लेशप्रहाणमिह लब्धसबीजयोगा:।**

**ख्यातिं च सत्त्वपुरुषान्यतयाधिगम्य, वाञ्छन्ति तामपि समाधिभृतो न रोद्धुम्।।**[28]

अर्थात् प्रकृतिपुरुषयोर्विवेकाभावत्वेन संसारे जीवस्य आवागमनं, विवेकग्रहणेन च मुक्तिरिति' सांख्यसिद्धान्त:। अत्र च निरूपयति टीकाकारो मल्लिनाथ: – सत्त्वपुरुषयो: प्रकृतिपुरुषयोरन्यतयाऽन्यत्वेन मिथो भिन्नत्वेन ख्यातिं ज्ञानं चाधिगम्य प्रकृतिपुरुषौ भिन्नाविति ज्ञात्वेत्यर्थ:। प्रकृतिपुरुषयोर्विवेकाग्रहणात् संसार:। विवेकग्रहणान्मुक्तिरिति सांख्या:। अथ तां ख्यातिमपि निवर्तयितुं वाञ्छन्ति वृत्तिरूपाम्। तां निवर्त्य स्वयंप्रकाशतयैव स्थातुमिच्छन्तीत्यर्थ:। 'प्रकृतावुपरतायां पुरुषस्वरूपेणावस्थानं मुक्ति:' इति सांख्यसिद्धान्त:। अनेन रैवतकपर्वतोऽयं न केवलं भोगभूमि:, किन्तु मोक्षक्षेत्रमपीति भाव:'।[29]

सन्दर्भेऽस्मिन् कथयति बल्लभदेव:- 'प्रकृतिपुरुषयोर्भेदज्ञानं ख्यातिस्तदाह- सत्त्वपुरुषान्यतयेति- सत्त्वै: कनिष्ठा बुद्धि: सत्त्वं, पुरुष आत्मा तयोरन्यतया भेदस्तया हेतुना ख्यातिरधिगम्यते तद्रूपत्वात्तस्या:। न हि दृश्यद्रष्ट्रोर्भेदाग्रहणे ख्यातिर्भवति, तेन अन्या बुद्धिरन्यश्चात्मा इत्येवं प्रथममभ्यस्य पश्चात्पुरुषमेव निर्गुणं जिज्ञासन्ते इत्यर्थ:।'[30]

पद्येऽस्मिन् योगतत्त्वं यथा- इहास्मिन् रैवतके समाधिभृतो योगिन: ख्यातिं ज्ञानविशेषमधिगम्य अनन्तरं तामपि निवर्तयितुमभिलषन्ति। चेतस ऐकाग्रयं समाधि:। स च योगाङ्गोपलक्षणम्- यमनियमासनप्राणायामप्रत्याहारध्यानधारणासमाधीनष्टावपि हि ते विभ्रति। **'मैत्रीकरुणामुदितोपेक्षेति चतस्रश्चित्तवृत्तय:।'** योगसूत्रम्-1/33 तत्र पुण्यकृत्सु मैत्री। दु:खिषु करुणा। सुखिषु मुदिता अनुमोदनम्।

26 सर्वङ्कषाटीका 2/59
27 सांख्यकारिका- का.सं.-20
28 शिशु.महाकाव्यम् 4/55
29 सर्वङ्कषाटीका 4/55
30 संदेहविषोषधिटीका-4/55

पापिषु उपेक्षा। अतएव क्लेशप्रहाणं विधाय- **'अविद्यास्मितारागद्वेषाभिनिवेशाः पञ्च क्लेशाः।'** योगसूत्रम्-2/3 तत्रानित्येषु नित्यत्वाभिमानः, अनात्मनि च देहेन्द्रियादावात्मधीरित्यादिविभ्रमोऽविद्या। अस्मिता अहङ्कारः। रागोऽभिमतविषयाभिलाषः। द्वेषोऽनभिमतेषु रोषः। अभिनिवेशः कार्याकार्येष्वाग्रहः। ते हि पुरुषं क्लिश्यन्तीति क्लेशाः क्लेशहेतवः। कीदृशाः समाधिभृत इति विशेषणद्वारेण ख्यातिप्राप्तावुपायमाह- (ख्यातिं ज्ञानमधिगम्य)-मैत्र्यादयश्चित्तपरिकर्म चेतसः प्रसादनं तद्विदन्ति ये। मैत्रीकरुणामुदितोपेक्षाणां सुखदुःखपुण्यापुण्यविषयाणामभ्यासाच्चेतः प्रसादनं चित्तपरिकर्म । सुखितेषुमैत्रीममात्सर्यं भावयेत्, दुःखितेषु कारुण्यं, पुण्यवत्स्वनुमोदनं, पापिषूपेक्षामतश्च रजस्तमोनाशाच्चेतः प्रसीदति। तथा लब्धः प्राप्तः सबीजः सालम्बनो योगः समाधिर्यैस्ते लब्धसबीजयोगाः। किं कृत्वा लब्ध सबीजयोगा इत्याह- क्लेशानामविद्यास्मितारागद्वेषाभिनिवेशानां च्यवनं कृत्वा। अन्त्याशुचिदुःखानात्मसु विपरीतज्ञानमविद्या, भिन्नयोर्बुद्ध्यात्मनोरेकत्वप्रतीतिरस्मिता सुखेष्वासक्ती रागः, दुःखेष्वप्रीतिर्द्वेषः, अननुभूतादपि मरणादेस्त्रासोऽभिनिवेशः, एतेषां क्लेशानां क्षयं विधाय मैत्र्यादिचाभ्यस्य ततः ख्यातिमासाद्य तत्रापि हेयत्वाद्विरक्ताः सन्तस्तामपि हेयपक्षे क्षिपन्तीति वाक्यार्थः। [31]

रजोगुणस्य विकासवादक्रियायां किं स्वरूपं भवति, तथ्यमिदमित्थं निर्दिशति महाकविमाघः-

**विहिताञ्जलिर्जनतया दधती विकसत्कुसुमारुणताम्।**
**चिरमुज्झितापि तनुरौज्झदसौ न पितृप्रसूः प्रकृतिमात्मभुवः।।**[32]

अत्र संध्याप्रादुर्भावचित्रणेन सांख्यतत्त्वमपि वर्णयति, यथा जनसमूहेन कृतप्रणामा, विकसत्कुसुमवदरुणतां दधती राजसप्रकृतित्वाद्, पितृणां जनयित्री इयं संध्यारूपिणी ब्रह्मणः मूर्तिश्चिरं त्यक्ताऽपि स्व-स्वभावं न विससर्ज।

तदुक्तं सर्गाय रक्तं रजसोपवृंहितम् इति। सत्त्वगुणस्य स्वरूपं प्रकाशोऽस्ति तमोगुणस्य चान्ध कारः। परमत्र उत्पाद्याशक्तिर्प्रदातृ रजोगुण एव। यथा प्रवहमानं जलं स्वयं तु प्रवहत्येव, तेन साकं तृणादीन्यपि प्रवाहयति, तथैव रजोंगुणः स्वयं क्रियापरं भूत्वा अन्यगुणानपि क्रियापरं कारयति। रक्तवर्णोऽयम्। अत्र च कथयति मल्लिनाथः-

'पितृणां प्रसूः पितृप्रसूः असावियं संध्यारूपिणी आत्मभुवो ब्रह्मणस्तनुमूर्तिश्चिरमुज्झिताऽपि प्रकृतिं स्वभावम्, जगद्वन्द्यत्वादिनिजधर्ममित्यर्थः। भूतपूर्वोऽपि महाजनपरिग्रहः फलतीति भावः। अत्र भविष्यपुराणस्य कथामुल्लिखति-

---

31 संदेहविषोषधिटीका-4/55

32 शिशु.महाकाव्यम् 9/14

**पितामहः पितृन् सृष्ट्वा मूर्ति तामुत्ससर्जह।**
**सा प्रातः सायमागत्य संध्यारूपेण पूज्यते।।** [33]

त्रयोदशसर्गे योगदर्शनस्य तत्त्वं यथा-

**वशिनं क्षितेरयनया विवेश्वरं नियमो यमश्च नियतं यतिं यथा।**
**विजयश्रिया वृत्तमिवार्कमारुतावनुसस्रतुस्तमथ दस्रयोः सुतौ।।**[34]

नियतमाचारनिष्ठं यतिं जितेन्द्रियम्। नियमः- शरीरातिरिक्तदेशकालादिसाधनापेक्षः सन्ध्योपासनजपादिः। वा- नियमोऽनुष्ठेयरूपः शौचादिः। यमो निषिद्धवर्जनमहिंसादिः। यमः- शरीरमात्रसाध नापेक्षोऽहिंसादिः। उक्तञ्च पातञ्जलयोगसूत्रे-

**अहिंसासत्यास्तेयब्रह्मचर्यापरिग्रहा यमाः।**
**शौचसन्तोषस्वाध्यायेश्वरप्रणिधानानि नियमाः।** इति।

पद्येऽस्मिन् नकुलसहदेवौ- यमनियमाविव। देवपुरुषकाराविव। अर्कमारुताविव नकुलसहदेवौ तं हरिमनुचेरतुः। इति वल्लभदेवः।[35]

**पुनः चतुर्दशसर्गे यथा- तस्य सांख्यपुरुषेण तुल्यतां बिभ्रतः स्वयमकुर्वतः क्रियाः।**
**कर्तृता तदुपलम्भतोऽभवद्वृत्तिभाजि करणे यथार्त्विजि।।**[36]

पद्येऽस्मिन् माघः सांख्यशास्त्रमतमित्थं प्रतिपादयति- यद्यपि आत्मा स्वयं पुण्यपापकर्माणि न करोति, किन्तु बुद्धया एव क्रियते, परं तेषु वृत्तिभाजि सत्येव आत्मा एव पुण्यपापकर्माणि करोति इति मन्यते। यथा अत्र कार्यमकुर्वतोऽपि युधिष्ठिरः तस्य कर्मफलवान् मनुते। स्वयं क्रियाभोगरहितोऽप्यात्मा बुद्धेः सन्निधानाद्रक्तस्फटिकवत्तथा भवतीत्यर्थः।

अत्र च निरूपयति मल्लिनाथः - 'अत एव सांख्यपुरुषेण सांख्यशास्त्रोक्तेनात्मना तुल्यतां बिभ्रतस्तस्य राज्ञः अन्तःकरणे यथा। एवमेव कथयति बल्लभदेवः संदेहविषोषधिटीकायां - अतएव सांख्यपुरुषेण समीक्षोक्तेनात्मना साम्यं बिभ्राणस्य। किल करणे बुद्धौ सव्यापारे सुखदुःखोपभोक्तरि- निष्क्रियस्यापि पुरुषस्य कर्तृत्वम्, कुतः तासां बुद्धिकृतानां क्रियाणामुपलम्भाद् दर्शनात् प्रकृतिजनितानां हि क्रियाणां द्रष्टा सांख्यपुरुष उदासीनः, अतश्च बुद्धिबन्धमोक्षानुभवादात्मा बद्धो मुक्त इत्यभिधीयते।[37]

33 सर्वङ्कषाटीका 9/14
34 शिशु महाकाव्यम्-13/23
35 संदेहविषोषधिटीका- 13/23
36 शिशु.महाकाव्यम् 14/19
37 संदेहविषौषधि टीका 14/19

**तत्रैव- पद्मभूरिति सृजञ्जगद्रजः सत्त्वमच्युत इति स्थितिं नयन्।**
**संहरन्हर इति श्रितस्तमस्त्रैधमेष भजति त्रिभिर्गुणैः।।** [38]

एष हरिः रजोगुणमाश्रितो जगत्सृजन् ब्रह्मेति, सत्त्वगुणं श्रितः जगत्स्थितिं स्थापयन् विष्णुरिति, तमोगुणं श्रितो जगत् संहरन् शिव (हर) इति, त्रिभिर्गुणैः सत्त्वरजस्तमोभिस्त्रैधं त्रैविध्यं भजति। अस्यैव गुणभिन्नास्तास्तिस्त्रोऽपि मूर्तय इत्ययमेव सर्वोपास्य इति भावः। अतएवोक्तं -

**रजोजुषे जन्मनि सत्त्ववृत्तये स्थितौ प्रजानां प्रलये तमःस्पृशे।**
**अजाय सर्गस्थितिनाशहेतवे त्रयीमयाय त्रिगुणात्मने नम इति।।** [39]

योगदर्शनमाधृत्य कृष्णं पुंविशेषं सर्ववेदिनमिति प्रतिपादयति माघः। यथा-

**सर्ववेदिनमनादिमास्थितं देहिनामनुजिघृक्षया वपुः।**
**क्लेशकर्मफलभोगवर्जितं पुंविशेषममुमीश्वरं विदुः।।** [40]

अमुं कृष्णं सर्ववेदिनम्। अतएव अनादिमादिरहितम्। अनादिनिधनमिति। तथापि प्राणिनामऽनुग्रहीतुमिच्छया मानुषविग्रहमास्थितम्। न तु कर्मारब्धशरीरभाजमित्यर्थः। अतएव क्लेशकर्मफलभोगवर्जितम्। क्लेशाः पञ्च अविद्यास्मितारागद्वेषाभिनिवेशाख्याः। कर्माणि शुभाशुभानि (पुण्यपापानि) तेषां फलं सुखदुःखे तयोर्भोगोऽनुभवस्तेन क्लेशैश्च वर्जितम्। तैरसंस्पृष्टमित्यर्थः। ईश्वरमीश्वरशब्दितं पुंविशेषं क्षेत्रज्ञविलक्षणं पुरुषविशेषं परमपुरुषं वा विदुर्विदन्ति। उक्तञ्च पातञ्जलयोगसूत्रे- **'क्लेशकर्मविपाकाशयैरस्पृष्टः पुरुषविशेषईश्वरः।'** विस्तरेण तु तच्छास्त्रादेव सुबोधम्। इति वल्लभदेवः।

पुनः पञ्चदशसर्गे चतुस्त्रिंशच्छ्लोकेषु सांख्यदर्शनानुसारं महाकविमाघः भगवतः श्रीकृष्णस्य निर्गुणत्वं 'निर्गुणो हि पुरुष' इति सांख्याः' दर्शयति। तेनायं **'न महान्, न प्रधानम्, न भूतानि, न तन्मात्राणि, नाहङ्कारः, अपितु पञ्चविंशकोऽयं पुरुषः।** [41]

किं बहुना शिशुपालवधमहाकाव्ये माघेन सविस्तरेण सांख्ययोगदर्शनयोः तत्त्वानि विवेचितानि सन्ति। अनेन ज्ञायते महाकविमाघस्य सांख्ययोगशास्त्रीयपाण्डित्यस्य प्रकर्षः। प्रकृतिपुरुषयोः वैशिष्ट्यं निरूपयत महाकविमाघः सांख्ययोगशास्त्रीयतत्त्वानि बोधयति अस्मान्।

तत्र श्रीकृष्णः 'सांख्यशास्त्रीयपुरुषः' इति कथयति माघः। महाकाव्येऽस्मिन् भगवतः श्रीकृष्णस्य या स्तुतिः कृताऽस्ति, यत् स्वरूपमुद्भावितमस्ति , तत्र सर्वदर्शनानां समवायो दृश्यते। तत्र स एव श्रीकृष्णः क्वचिद् ब्रह्मरूपेण, क्वचिद् जगद्कर्तृरूपेण, क्वचिद् कर्मरूपेण, क्वचिद् सांख्यपुरुषत्वेन, क्वचिद् ईश्वरविशेषेण च वारं-वारमाराधितः वर्णितश्च। अनेन ज्ञायते यद् महाकविमाघः भारतीयदर्शनशास्त्रस्य प्रकाण्डविद्वानासीत्। तेषां पाण्डित्यमत्र सर्वथा परिलक्ष्यते।

---

38 शिशु.महाकाव्यम् 14/61

39 कादम्बरी मङ्गलपद्यम्

40 शिशु महा0-14/62

41 शिशु.महाकाव्यम्- 15, पद्यसं0- 39-72 संदेहविषोषधि टीका।

# धर्मशास्त्रीय राजधर्म व्यवस्था में ज्योतिषतत्त्व की भूमिका

श्रीधनञ्जय मणि त्रिपाठी

राष्ट्र की व्यवस्था इन सात अङ्गों पर निर्भर थी। यद्यपि इन सात अङ्गों में र्मशास्त्र में राज्य के सात अङ्ग बतलाये गये हैं[1]- स्वामी (राजा), अमात्य, राष्ट्र या जनपद, दुर्ग, कोश, दण्ड (सेना), एवं मित्रसे ऐसा कोई भी नहीं है जो दूसरे के बिना अपना अस्तित्व बनाये रखे- सभी एकदूसरे पर समान रूप से आश्रित एवं अवलम्बित हैं[2] तथापि इनमें राजा को श्रेष्ठ माना गया है। कौटिल्य ने तो राजा को ही संक्षेप में राज्य कह दिया है।[3] मनु के अनुसार समाज में एक समय ऐसा आ गया जब अराजकता थी। राजा के अभाव में समाज में अन्याय और अनाचार चरम-सीमा पर था। अत्याचारियों और दुष्टों के भय से पीड़ित प्रजा इधर-उधर भागती रहती थी। इसीलिए ईश्वर ने सम्पूर्ण चराचर की रक्षा हेतु राजा को बनाया। राजा व्यवस्था स्थापित करने के लिए ईश्वर द्वारा भेजा गया अत: उसे साधारण जनता से श्रेष्ठ माना गया। ईश्वर ने इन्द्र, वायु, यम, सूर्य, अग्नि, वरुण, चन्द्रमा और कुबेर का सारभूत नित्य अंश लेकर राजा की सृष्टि की है।[4] राजा के महत्त्व को बताते हुए कहा गया है कि राजा भले ही बालक हो किन्तु उसे एक मर्त्य मनुष्य के समान समझना भारी भूल है। वह इस मर्त्य शरीरम में ईश्वर है। राजा के पक्ष में भाग्य और विजय के देवता वसा करते हैं और उसके क्रोध में यम और मृत्यु का निवास है। वह देवों के नित्य अंश से निर्मित होने के कारण अपने प्रभाव से अग्नि, वायु, सूर्य, कुबेर और महेन्द्र रूप में है।[5] आदिकवि वाल्मीकि भी कहते हैं कि राजा के प्रति अप्रिय व्यवहार नहीं करना चाहिए, क्योंकि वह मनुष्य रूप में देवता ही विवरण कर रहा है।[6] राज्य में राजा का न होना अशुभ है और इसकी तुलना चरवाहे के बगैर गाय से की गयी है।[7]

---

1. (क) "स्वाम्यमात्यजनदुर्गकोशदण्डमित्राणिप्रकृतय:।" - अर्थशास्त्र 6/1
   (ख) मनुस्मृति 9/294
   (ग) याज्ञवल्क्यस्मृति 1/353
2. मनुस्मृति 9.296
3. "राजा राज्यमिति प्रकृतिसंक्षेप:।" -अर्थशास्त्र 8/2
4. मनुस्मृति 7/374
5. तत्रैव 7/8, 11
6. नात्र हिंस्यात्र चाक्रोशेन्नाक्षिपेन्नाप्रियं वदेत्।
   देवा मानुषरूपेणचरन्त्येते महीतले।। रामायण- किष्किंधाकाण्ड 42
7. रामायण अयोध्याकाण्ड 67/29

